Maurya King on the throne of Pataliputra about the year 319 B. C. So *Kamandaka* must have lived about this time. He was a celebrated statesman and his work discusses the principles of Government and lays down rules for the guidance of Kings ; but interspersed in it there are many excellent maxims of general application some of which have been inserted in this volume.

*Subháshitávali.* Some verses on *Nitipaddhati* have been selected from this. The compiler of this was *Vallabhadeva.* Of this compiler all I can say is that he cannot have flourished before *Jainollabhadin*, whose date is given by Cunningham as 1417—1467 A. D. The language of these verses is simple and imparts moral lessons to young readers.

*Kalividambana.* This has been compossd by *Nilakantha Dikshita.* He flourished about the first quarter of the 17th century A. D. in the Dravid country, where he was born. The name of *Nilakantha's* father was *Narayana*, of his mother, *Bhumidevi*, and of his grandfather, *Achchappa*, who was a younger brother to *Appa-Dikshita.* The following books are attributed to this writer ;—the अन्यापदेशशतकं, कलिविडम्बनशतकं, गंगावतरणं, नीलकंठविजयः शांतिविलासः, शिवलीलार्णवः and the सभारंजनं. The verses selected from this teach moral maxims to young readers.

*Sivakávya.* Besides Rájatarangini it is the only real history in the Sanskrit language. It was written by Pandit *Purushottama*, a writer of the 17th or 18th century A. D. According to some he was a contemporary to S'ivàji the founder of the Maratha Empire. It embraces a period beginning with the foundation of the Maratha Empire and ending with the

year 1818 A. D. This historical poem describes the rise, greatness and fall of the Empire from the times of Sivaji the great to the abdication of Baji Rava II. 1627—1818. The portion selected gives the description of the battle fought between Sivaji and the Emperor of Bijapura.

*Sisupálavadha.* At the end of his poem *Mágha* tells us that he was the son of Dattaka, otherwise called *Sarvásraya*, and grandson of *Suprabhadeva*, who was a minister of a King called *Sri Dharmadeva*. He flourished about the first quarter of the 9th century of the Christian era. *Anandavardhanácharya* a Kashmirian writer of the last quarter of the 9th century, quotes in his *Dhvanyáloka* some verses from *Mágha*; and *Magha* in his poem quotes some verses from *Nyasa*, the production of *Jinendrabuddhipada*. From this evidence it is clear that *Mágha* must have preceded *Anandavardhana* and succeeded *Jinendrabuddhi*. *Magha* is a poet of great merit. He shows a just appreciation of the awe-inspiring beauty and grandeur of the Court life. He is a master of style and expression, and his cleverness in employing new words almost in every verse, is unsurpassed; and hence his style, it appears, is studiously majestic and often imposing. His poems show a wonderful intensity of feeling, wealth of imagination, and sublimity of thought. They are often difficult to understand, and frail as mist, yet surprisingly beautiful.

The above information is intended simply because the students may find some interest in the account of our illustrious ancient poets and writers whose works they generally read with great pleasure.

Poona,
July 3rd 1888. } G. R. N.

# CONTENTS.

# गद्यपद्यतरङ्गिणी.

# PART I.

## I

### TARANGA I.

[Then the Minister गोमुख again said to नरवाहनदत्त, in order to solace him while pining for शक्तियशाः; "Prince, you have heard a tale of a wise person, now hear a tale about a fool."]

पुरासीत् मुग्धबुद्धिर्नाम कस्यचिदाढ्यस्य वणिजः सुतः। स कदाचित् वणिज्यार्थे कटाहद्वीपमगात्। तस्य भाण्डमध्ये महानगुरुसञ्चयः स्थितः। तत्र च विक्रेता कश्चित् परभाण्डस्य तस्य तद् अगुरु न जग्राह। तत्र च यो जन आसीत् स तत्र तदस्तीति न विवेद। एकदा काष्ठिकेभ्यः अंगारान् विक्रीणतो जनान् दृष्ट्वा स वणिक् जडबुद्धिस्तदगुरु दग्ध्वा अंगारानकरोत्। तच्च अंगारमूल्येन विक्रीय ततो गृहमागत्य च स तदात्मकौशलं शंसन् लोकेषु हास्यतामगमत्। तदेवमगुरुदाही कथितः साम्प्रतं तिलकर्षकः श्रूयताम्।

अभूत् कश्चिद् ग्रामिणो भूतपूर्वकृषीवलः। स कदाचित् तिलान् भृष्ट्वा भुक्त्वा च स्वादून् तानवेत्य भृष्टानेव तान् बहून् तादृशानेव प्राप्तुं भूमाववपत्। अथ भृष्टेषु तेषु अजातेषु जना नष्टार्थं तमहसन्। तथा जले अग्निक्षेपकमधुना शृणु।

आसीत् कश्चिन्मन्दबुद्धिः पुरुषः । स चैकदा निशायां प्रभाते देवतापूजां करिष्यामीति समचिन्तयत् । तदुपयुक्तौ मम स्नानधूपाद्यर्थौ जलानलौ एकत्र स्थापयामि, येन तौ शीघ्रं प्राप्नुयामिति । एवमालोच्य स जलकुम्भांतः अग्निं क्षिप्त्वा सुष्वाप । प्रातश्च यावदग्निं नष्टमम्बु च शुष्कम् अङ्गारमलिनञ्च जाते तावत्तस्य मुखं तादृगेवाभवत् । तदवलोक्य जनः सहासोऽभूत् । तदेवमग्निकुम्भवार्ता श्रुता, सांप्रतं नासिकारोपणमाकर्णय ।

अभवत्कश्चिन्मूढमतिर्मूर्खः पुमान् क्वचिद्देशे । स कदाचित् भार्यां चिपिटघ्राणां गुरुञ्च उन्नतनासिकं दृष्ट्वा तस्य प्रसुप्तस्य गुरोर्नासिकां छित्वा अग्रहीत् आरोपयच्च तां भार्याया नासिकां छित्वा तत्स्थानम् । सा च गुरुनासा तस्या मुखे नैव आरुरोह । एवं तेन भार्यागुरू उभावपि छिन्ननासौ कृतौ । अधुना वनवासी कश्चित् पशुपालः श्रूयताम् । **सोमदेवः—कथासरित्सागरः**

## नीलीभाण्डपतितस्य शृगालस्य ।

अस्ति कस्मिंश्चिद्वनोद्देशे चण्डरवो नाम शृगालः । स कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरमध्ये प्रविष्टः । अथ तं सारमेया विलोक्य सर्वतः शब्दायमानाः परिधाव्य तीव्रदन्तैर्भक्षयितुमारब्धाः । सोपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं प्रविष्टः । तत्र नीलीरसपरिपूर्णमहाभाण्डमासीत् । तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः । अथ यावन्निष्क्रान्तस्तावन्नी-

लीवर्णः संजातः । तत्रापरे सारमेयास्तं शृगालमजानन्तो यथा-भीष्टदिशं जग्मुः । चण्डरवोपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे न च नीलवर्णेन कदाचिन्निजरङ्गस्त्यज्यते । अथ तं हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोरण्यनिवासिनो भयव्याकुलितचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति कथयन्ति च । न ज्ञायतेस्य कीदृग्विचेष्टितं पौरुषं च । तद्दूरतरं गच्छामः ।

चण्डरवोपि भयव्याकुलितान्विज्ञायेदमाह । भोभोः श्वापदाः किं यूयं मां दृष्ट्वैव संत्रस्ता व्रजथ । तन्न भेतव्यम् । अहं ब्रह्मणाद्य स्वयमेव सृष्ट्वाभिहितः । यच्छ्वापदानां कश्चिद्राजा नास्ति तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेभिषिक्तस्ततो गत्वा तान्सर्वान्परिपालयेति । ततोहमत्रागतः । तन्मम छत्रच्छायायां सर्वैरपि श्वापदैर्वर्तितव्यम् । अहं ककुद्रुमो नाम राजा त्रैलोक्येपि संजातः। तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः स्वामिन्प्रभो समादिशेति वदन्तस्तं परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता व्याघ्रस्य शय्यापालकत्वं द्वीपिनस्ताम्बूलाधिकारो वृकस्य द्वारपालकत्वम् । ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति । शृगालाः सर्वेपि निःसारिताः । एवं तस्य राजक्रियया वर्तमानस्य सिंहादयो मृगान्व्यापाद्य तत्पुरतः प्रक्षिपन्ति । सोपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति । एवं गच्छति काले कदाचिद्दूरदेशे शब्दायमानाः शृगालाः आकर्णिताः । तेषां शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपूर्णनयनस्तारस्वरेण विरोतुमारब्धः । अथ

ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोयमिति मत्वा लज्जयाधोमुखः क्षणं स्थित्वा प्रोचुः । भो वाहिता अनेन वयम् । क्षुद्रशृगालोयम् । तद्वध्यतामिति । सोपि तदाकर्ण्य पलायितुमिच्छंस्तत्र स्थाने एव सिंहादिभिः खण्डशः कृतो मृतश्च । विष्णुशर्मा–पञ्चतंत्रम् ।

## बककुलीरयोः ।

अस्ति मालवदेशे पद्मगर्भनामधेयं सरः । तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः । स च केनचित्कुलीरेण दृष्टः । पृष्टश्च किमिति भवानत्राहारत्यागेन तिष्ठति । बकेनोक्तम् । मत्स्या मम जीवनहेतवस्ते कैवर्तैरागत्य व्यापादितव्या इति वार्ता नगरोपान्ते मया श्रुता । अतो वर्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाहारेप्यनादरः कृतः। ततो मत्स्यैरालोचितम् । इह समये तावदुपकारक एवायं लक्ष्यते । तदयमेव यथा कर्तव्यं पृच्छ्यताम् । मत्स्या ऊचुः । भो बक कोत्र रक्षणोपायः । बको ब्रूते । अस्ति रक्षणोपायः । जलाशयान्तराश्रयणं तत्राहमेकैकशो युष्मान्नयामि । मत्स्या आहुः । एवमस्तु । ततोसौ बकस्तान्मत्स्यानेकैकशो नीत्वा खादति । अनन्तरं कुलीरस्तमुवाच । भो बक मामपि तत्र नय । ततो बकोप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरोपि मत्स्यकण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत् । हा हतोस्मि मन्दभाग्यः । भवत्विदानीं समयोचितं व्यवहरिष्यामि ।

इत्यालोच्य कुलीरस्तस्य ग्रीवां चिच्छेद। स बकः पञ्चत्वं गतः।
पण्डितनारायणः—हितोपदेशः

Notes and Meanings.

आढ्य *adj.* Rich, wealthy, opulent.
वणिज्या *f.* Trading, a trade.
कटाहद्वीप *m.* A name of an island.
भाण्ड *m.* Wares. A vessel
अगुरुसंचय *m.* A store of aloes-wood.
वप् *conj.* I. P. A. To sow, to scactter seed.
चिपिटघ्राण *adj.* Flat-nosed.
नीलीवर्ण is a बहुव्रीहि compound, one who has the color of Indigo.
द्वीपिन् *m.* A panther, a leopard.
बक *m.* A crane.
कुलीर *m.* A crab.
कैवर्तक *m.* A fisher-man.
मत्स्यकंटक *m. n.* A fishbone.

---

TARANGA 2.

[After Das'aratha's demise Bharata's sarcastic remarks on Kaikeyi's conduct.]

श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ ॥
भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ १ ॥
किं नु कार्यं हतस्येह मम राज्येन शोचतः ॥
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥
दुःखे मे दुःखमकरोर्व्रणे क्षारमिवाददाः ॥
राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ३ ॥
कुलस्य त्वमभावाय कालरात्रिरिवागता ॥

अंगारमुपगुह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥
मृत्युमापादितो राजा त्वया मे पापदर्शिनि ॥
सुखं परिहृतं मोहात्कुलेस्मिन् कुलपांसनि ॥ ५ ॥
त्वां प्राप्य हि पिता मेऽद्य सत्यसंधो महायशाः ॥
तीव्रदुःखाभिसंतप्तो वृत्तो दशरथो नृपः ॥ ६ ॥
विनाशितो महाराजः पिता मे धर्मवत्सलः ॥
कस्मात्प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ७ ॥
कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते ॥
दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ८ ॥
नन्वार्योपि च धर्मात्मा त्वयि वृत्तिमनुत्तमाम् ॥
वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ ९ ॥
तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी ॥
त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ १० ॥
तस्याः पुत्रं महात्मानं चीरवल्कलवाससम् ॥
प्रस्थाप्य वनवासाय कथं पापे न शोचसे ॥ ११ ॥
अपापदर्शिनं शूरं कृतात्मानं यशस्विनम् ॥
प्रव्राज्य चीरवसनं किं नु पश्यसि कारणम् ॥ १२ ॥
लुब्धाया विदितो मन्ये न तेहं राघवं यथा ॥
तथा ह्यनर्थो राज्यार्थं त्वयानीतो महानयम् ॥ १३ ॥
अहं हि पुरुषव्याघ्रावपश्यन् रामलक्ष्मणौ ॥
केन शक्तिप्रभावेण राज्यं रक्षितुमुत्सहे ॥ १४ ॥
त्वं हि नित्यं महाराजो बलवंतं महौजसम् ॥

उपाश्रितोभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १९ ॥
सोहं कथमिमं भारं महाधुर्यसमुद्यतम् ॥
दम्यो धुरमिवासाद्य सहेयं केन चौजसा ॥ १६ ॥
अथवा मे भवेच्छक्तिर्योगैर्बुद्धिबलेन वा ॥
सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥ १७ ॥
न मे विकांक्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् ॥
यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा ॥ १८ ॥
उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनि ॥
साधु चारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ १९ ॥
अस्मिन् कुले हि सर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ॥
अपरे भ्रातरस्तस्मिन्प्रवर्तंते समाहिताः ॥ २० ॥
न हि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे ॥
गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१ ॥
सततं राजपुत्रेषु ज्येष्ठो राजाभिषिच्यते ॥
राज्ञामेतत्समं तत्स्यादीक्ष्वाकूणां विशेषतः ॥ २२ ॥
तेषां धर्मैकरक्षाणां कुलचारित्रशोभिनाम् ॥
अद्य चारित्रशौटीर्यं त्वां प्राप्य विनिवर्तितम् ॥ २३ ॥
तवापि सुमहाभागे जनेंद्रकुलपूर्वके ॥
बुद्धिमोहः कथमयं संभूतस्त्वयि गर्हितः ॥ २४ ॥
न तु कामं करिष्यामि तवाहं पापनिश्चये ॥
यया व्यसनमारब्धं जीवितांतकरं मम ॥ २९ ॥
एष त्विदानीमेवाहमप्रियार्थं तवानघे ॥

निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥ २६ ॥
निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः ॥
दासभूतो भविष्यामि सुस्थितेनांतरात्मना ॥ २७ ॥
इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ॥
शोकार्दितश्चापि ननाद भूयः सिंहो यथा मंदरकंदरस्थः २८
तां तथा गर्हयित्वा तु मातरं भरतस्तदा ॥
रोषेण महता विष्टः पुनरेवाब्रवीद्वचः ॥ २९ ॥
राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि ॥
परित्यक्तासि धर्मेण मा मृतं रुदती भव ॥ ३० ॥
किं नु ते दूषयद्रामो राजा वा भृशधार्मिकः ॥
ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३१ ॥
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् ॥
कैकेयि नरकं गच्छ मा च तातसलोकताम् ॥ ३२ ॥
यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा ॥
सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ३३ ॥
त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः ॥
अयशो जीवलोके च त्वयाहं प्रतिपादितः ॥ ३४ ॥
मातृरूपे ममामित्रे नृशंसे राज्यकामुके ॥
न तेहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ॥ ३५ ॥
कौसल्या च सुमित्रा च याश्चान्या मम मातरः ॥
दुःखेन महता विष्टास्त्वां प्राप्य कुलदूषिणीम् ॥ ३६ ॥
नत्वमश्वपतेः कन्या धर्मराजस्य धीमतः ॥

राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ३७ ॥
यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः ॥
वनं प्रस्थापितो वीरः पितापि त्रिदिवं गतः ॥ ३८ ॥
यत्प्रधानासि तत्पापं मयि पित्रा विनाकृते ॥
भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ३९ ॥
कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये ॥
कृत्वा कं प्राप्स्यसे ह्यद्य लोकं निरयगामिनी ॥ ४० ॥
किं नावबुध्यसे क्रूरे नियतं बंधुसंश्रयम् ॥
ज्येष्ठं पितृसमं रामं कौसल्यायात्मसंभवम् ॥ ४१ ॥
अंगप्रत्यंगजः पुत्रो हृदयाच्चाभिजायते ॥
तस्मात्प्रियतरो मातुः प्रिया एव तु बान्धवाः ॥ ४२ ॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता ॥
वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ ४३ ॥
तावर्धदिवसं श्रांतौ दृष्ट्वा पुत्रौ महीतले ॥
रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणम् ॥ ४४ ॥
अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः ॥
बिंदवः पतिता गात्रे सूक्ष्माः सुरभिगंधिनः ॥ ४५ ॥
निरीक्षमाणस्तां शक्रो ददर्श सुरभिं स्थिताम् ॥
आकाशे विष्ठितां दीनां रुदतीं भृशदुःखिताम् ॥ ४६ ॥
तां दृष्ट्वा शोकसंतप्तां वज्रपाणिर्यशस्विनीम् ॥
इंद्रः प्रांजलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ ४७ ॥
भयं कच्चिन्नचास्मासु कुतश्चिद्विद्यते महत् ॥

कुतो निमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ॥ ४८ ॥
एवमुक्ता तु सुरभिः सुरराजेन धीमता ॥
प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ ४९ ॥
शांतं पापं न वः किंचित्कुतश्चिदमराधिप ॥
अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ ५० ॥
एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ॥
वध्यमानौ बलीवर्दौ कर्षकेण दुरात्मना ॥ ५१ ॥
मम कायात्प्रसूतौ हि दुःखितौ भारपीडितौ ॥
यौ दृष्ट्वा परितप्येहं नास्ति पुत्रसमः प्रियः ॥ ५२ ॥
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् ॥
तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ ५३ ॥
इंद्रो ह्यश्रुनिपातं तं स्वगात्रे पुण्यगंधिनम् ॥
सुरभिं मन्यते दृष्ट्वा भूयसीं तामिहेश्वरः ॥ ५४ ॥
समाप्रतिमवृत्ताया लोकधारणकाम्यया ॥
श्रीमत्या गुणमुख्यायाः स्वभावपरिचेष्टया ॥ ५५ ॥
यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् ॥
किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ॥ ५६ ॥
एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता ॥
तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ ५७ ॥
अहं त्वपचितिं भ्रातुः पितुश्च सकलामिमाम् ॥
वर्धनं यशसश्चापि करिष्यामि न संशयः ॥ ५८ ॥
आनाय्य च महाबाहुं कोशलेंद्रं महाबलम् ॥

स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ५९ ॥
नह्यहं पापसंकल्पे पापे पापं त्वया कृतम् ॥
शक्तो धारयितुं पौरैरश्रुकंठैर्निरीक्षितः ॥ ६० ॥
सा त्वमग्निं प्रविश वा स्वयं वा विश दण्डकान् ॥
रज्जुं बध्वाथवा कंठे न हि तेन्यत्परायणम् ॥ ६१ ॥
अहमप्यवनीं प्राप्ते रामे सत्यपराक्रमे ॥
कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥ ६२ ॥
इति नाग इवारण्ये तोमरांकुशतोदितः ॥
पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः ॥ ६३ ॥
संरक्तनेत्रः शिथिलांबरस्तथा विधूतसर्वाभरणः परंतपः।
बभूव भूमौ पतितो नृपात्मजः शचीपतेः केतुरिवोत्सवक्षये
॥ ६४ ॥ वाल्मीकिः-रामायणं ।

## Notes and Meanings.

वृत्त *adj.* Dead, deceased.
उपगुह्य=आलिंग्य Having embraced, taken, accepted.
स्म=इति लोकोक्ती A particle shewing surprise; wholly, entirely.
पांसनी ( ना ) *f.* ( At the end of a compound ) defiling, disgracing, dis-honoring.
सत्यसन्ध *adj.* True to an agreement or compact, faithful to an engagement, faithful, veracious.
वृत्ति *f.* Conduct, behaviour.
दम्य *m.* A young bullock.
सह् *conj.* I. A. ( In Epic Parasm. ) to endure.
गर्धिनी *f.* Greedy, covetous, pursuing or following with eagerness. पुत्रराज्याभिलाषवती
अवेक्षा *f.* Regard, attention, care.
शौटीर्य *n.* Heroism, pride, prowess.
जनेन्द्रकुलपूर्वके=जनेद्रः कैकेयकुलकूटस्थः पूर्वकः कारणं यस्या

स्तथाभूते अतो महाकुलप्रसूते.

मा मृतं रुदती भव=मृतं भर्तारमुद्दिश्य रुदती मा भव । अथवा मा मां मृतं दृष्ट्वा रुदती भव ।

भ्रूणहत्या *f.* A child-murder, the killing of an embryo.

कौसल्याया आत्मसंभवं An आर्षसन्धिः ( deviation from Pa*n*ini ).

अन्यदा *ind.* One day, once.

कर्षक *m.* A plough-man.

भूयसी *f.* Excellent.

समाप्रतिमवृत्तायाः=समं सर्वप्राण्यनुग्रहे वैषम्यरहितमप्रतिमं सर्वोत्तमं वृत्तं चरित्रं यस्याः.

अपचिति *f.* A worship, adoration.

परायण *n.* A final end or aim last resort or refuge.

कल्मष *m. n.* Stain, dirt, sin.

तोमर *m. n.* An iron club or crow, a lance.

---

## TARANGA 3.

[Tales from S'riharsha—The Ratnâvalí.]

आसीदिह भारते वर्षे पुरा कौशाम्बी नाम नगरी । तत्रोदयनेत्यपरनामधेयो वत्स इति राजा बभूव । तस्य च यौगन्धरायणनामा कोपि मन्त्री आसीत् । तस्मिन्राज्ञि वसुधां शासति केनाचित्सिद्धेनादिष्टम् । यः कोपि सिंहलेश्वरस्य विक्रमबाहोर्दुहितू रत्नावल्याः पाणिं विवाहविधौ ग्रहीष्यति स नूनं सार्वभौमो राजा भविष्यतीति । ततस्तत्प्रत्ययात्तेन मन्त्रिणा राज्ञः वत्सस्यार्थे बहुशः सिंहलेश्वरः प्रार्थितः । सिंहलेश्वरस्तु वत्सस्य महिष्या वासवदत्तायाः संबधित्वेन तस्याश्चित्तखेदो माभूदिति रत्नावलीं तस्मै न ददौ । तदा लावाणिके वह्नौ वासवदत्ता भस्मीभूतेति प्रख्यातिं समुत्पाद्य यौगन्धरायणः सिंहले-

श्वरसंनिकर्षं बाभ्रव्यं कञ्चुकिनं रत्नावलीं पुनः प्रार्थयितुं प्रेषयामास । ततस्तेन उदयनसंबन्धकांक्षिणा सिंहलेश्वरेण दत्ता रत्नावली वत्साय प्रतिपादयितुं तदमात्येन वसुभूतिना बाभ्रव्येण चानीयमाना समुद्रे पोतभङ्गान्निमग्ना । जलनिमग्नया तया किमपि दारुफलकं समासादितम् । अथ सिंहलेभ्यः प्रत्यागच्छता केनचित्कौशाम्बीयेन वणिजा दुःस्थिता सा संभाविता । रत्नमालाचिह्नायास्तस्याः प्रत्यभिज्ञानात्कौशाम्बीं च प्रापिता । तदा यौगन्धरायणः सागरतः प्राप्तां तां राजदारिकां सागरिकेति नाम बिभ्रतीं सगौरवं देवीहस्ते निचिक्षेप ।

अथैकदा प्रवृत्ते वसन्तोत्सवे वासवदत्ता मया सह भगवतः कुसुमायुधस्य पूजां निर्वर्तयितुमागंतव्यामिति चेटीमुखेन राजानं विज्ञापयामास । तद्विज्ञप्त्यनुरोधेन पार्थिवो यावत्तत्र याति तावद्वासवदत्तापि तत्रात्मानं संदर्शयामास । ततः परिजनमध्यगतामकृत्रिमसौन्दर्यसारशोभां सागरिकां निरीक्ष्य राज्ञो दृष्टिपथाद्रिरक्षिषु राज्ञी तां कार्यान्तरव्याजेनान्यत्र प्रेषयामास । सागरिका तु तत्रैव प्रच्छन्नविग्रहा भूत्वा तस्थौ । अनन्तरं वैतालिकेन यदृच्छयोदीरितं तस्योदयनेति नाम श्रुत्वा अस्यैवाहं तातदत्तेति तस्मिन् राज्ञि बद्धभावा बभूव । अथैकदा रहः सेवमाना सागरिका कदलीगृहं गत्वा चित्रफलके समुद्गकोद्धृतवर्तिकया राजानं निवेशयामास । अत्रान्तरे तत्प्रियवयस्या सुसंगता तस्यास्तच्चेष्टितं सम्यगवलोक्य चित्रफलके च राज्ञः प्रतिकृतिं दृष्ट्वा तस्या मनोरथं प्रत्यनन्दत् । ततस्तस्या हस्ताच्चित्रफलक-

माक्षिप्य तत्र सागरिकामलिखत् । निपुणं विदितास्मि प्रियसख्येति निश्चित्य सापि आत्मगतं सर्वं वृत्तं तस्या आचख्यौ । अन्योन्यं मन्त्रयमाणयोस्तयोरालापस्य गृहीतवचना पञ्जरस्था सारिका आसीत् । यदा सागरिका अस्वस्था सखीविरचिते पुष्पतल्पेऽशेत तदा कोऽपि दुष्टमर्कटो मन्दुरायाः प्रभ्रष्टस्तयैव आशयाऽभ्यगात् । तमुपनमन्तमुपलभ्य चित्रफलकं त्यक्त्वोभे अपि तं प्लवङ्गमतिवाहयितुं तमालविटपान्धकारं प्राविक्षताम् । ततः स शाखामृग आगत्य पञ्जरमुद्घाट्यातिक्रान्तः । अतिक्रान्ते तस्मिन्कीशे सा मेधाविनी सारिकोद्घाटितद्वारदेशात्पञ्जरादुड्डिड्ये । तामुड्डीनां दृष्ट्वा ते अनुययतुः । परं सा न लेभे। अत्रान्तरे श्रीपर्वतादागताच्छ्रीखण्डदासनाम्नः कस्माच्चिद्धार्मिकाल्लब्धेन दोहलेनाकालपुष्पितामुद्यानगतां नवमाल्लिकां प्रत्यक्षीकर्तुमागतो राजा बकुलपादपे स्थितायाः सारिकाया अनिद्धाद्यपि विस्पष्टाक्षरं मंत्रणं श्रुतवान् । श्रुत्वा राजापि विदिताभिप्राय आसीत् । आह च । कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयैतदुक्तमिति । एतस्मिन्नन्तरे राज्ञो वयस्येन वसन्तकेनोच्चैः प्रहसता त्रासिता सारिकोड्डीयोपवने कदलीगृहाभिमुखं प्रतस्थे । तामनुयास्यन्तौ द्वावपि तत्र कदलीगृहे सारिकापञ्जरं चित्रफलकं च ददृशतुः । राजा चित्रफलके उत्कीर्णां सागरिकां दृष्ट्वा तत्र च कुसुमशय्यां मृणालान्लुलितनलिनीदलान्यन्यानि च अस्वस्थशरीरपिशुनानि वस्तूनि निरीक्ष्यार्तीव विवशो बभूव । ततः सागरिकासखी सुसंगतापि

चित्रफलकग्रहणव्यपदेशेन तत्रागत्य सुभाषितैः पार्थिवं संतर्प्य तस्मै तामर्पितवती। ततः एषा खल्वपरा देवी वासवदत्तेति राजसुहृद्वसन्तको भणितवान्। तद्वचः श्रुत्वा वासवदत्तागतेति परिशंक्य दाक्षिण्यविच्छेदभीरुको राजा सागरिकाया करं कण्ठाश्लेषाय धृतं सद्यो मुमोच। सागरिका सुसंगताद्वितीया गूढपथेन निश्चक्राम। अत्रान्तरे परमार्थतो वासवदत्ताजगाम। ततस्तद्भीत्या प्रच्छादितोऽपि चित्रफलको वसन्तकस्य कक्षात्सहसा प्रभ्रष्टः। तं प्रभ्रष्टं दृष्ट्वा जिज्ञासमाना वासवदत्ता तं गृहीतवती। तत्र चालिखिते राजसागरिके दृष्ट्वोद्भमन्युः सा पार्थिवमनुयुयुजे। ततः प्रत्युत्पन्नमतिर्वसंतक उदीरयामास। भवति, मान्यथा संभावय। आत्मा किल दुःखेनालिख्यत इति मम वचनं श्रुत्वा प्रियवयस्येनैतदालेख्यविज्ञानं दर्शितामिति। श्रुत्वेदं भूयोपि फलकं निर्दिश्य महिषी निजगाद। आर्यपुत्र, एषापि यापर तव समीप आलिखिता तत्किमार्यवसन्तकस्य विज्ञानमिति। ततः पार्थिवो बभाषे। देवि, इयं हि स्वचेतसैव परिकल्प्य लिखिता, न कदापि दृष्टपूर्वेति। ततो घुणाक्षरविसंवादे विस्मयमानोत्कण्ठितेन भर्त्रा सागरिकैव तत्रालिखितेति निश्चिन्वाना शिरोवेदना संजातेति सापदेशं निर्जगाम।

अथ कालक्रमेण नृपमप्रकृतिस्थं दृष्ट्वा तस्य वयस्यः सुसंगतां रहः समासाद्य भद्रे तत्रभवतो मे प्रियवयस्यस्य अस्वस्थतायाः कोपि प्रतीकारश्चिन्त्यतामिति आज्ञापयामास। तदा सापि विरचितभङ्गिनिवेशां सागरिकां गृहीत्वा देव्याश्चेव्याः का-

ञ्चनमालाया च वेशं स्वयं परिधाय प्रदोषे माधवीलतामण्डपे ता-मानीतवती ।

ततो भगवति अशेषभुवनद्वीपदीपकेऽस्तमिते तिमिरसंघातस्थगितासु आशासु वसन्तकादधिगतसंकेतवृत्तो राजा तेनोपचर्यमाणो माधवीलतामण्डपमाजगाम । ततोऽवस्थितमाधवीलतामण्डपान्तर्गतशिलातलसंकेतस्थाने सवसंतके राज्ञि सागरिका राजानमभिसरिष्यतीत्युदन्तमुपलभ्य काञ्चनमालया सह अवगुण्ठनवती वासवदत्ता तत्राडुढौके । ततो वासवदत्तां सागरिकां मन्यमानो वसन्तको राजानमुपसृत्य तस्या आगमनं तस्मै शशंस । राजाप्युपसृत्य सागरिकाधिया तां प्रीतिप्रमुखवचनैरनुनेतुं प्रसादयितुं च आरब्धवान् । तानि वचांसि श्रुत्वा वासवदत्ता कोपपरीताङ्गी अवगुण्ठनपटमपनीयात्मानं संदर्शयामास। तां दृष्ट्वा विस्मयान्वितो राजा तत्प्रसादनपरो बभूव।सा त्वकृत्वैव प्रसादं गतवती।गतायां तस्यां वासवदत्तावेषधारिणी सागरिकैकाकिनी तमेवोद्देशमाजगाम । तस्याः पदशब्दं श्रुत्वा पुनः प्रसादं कर्तुं देव्यागतेति मत्वा निरूपयितुं गतो वसन्तको लतापाशं विमुच्यात्मानमुद्बध्य आत्मघातोद्यतां सागरिकां ददर्श । वेषसादृश्याद्विप्रलब्धश्च तां वासवदत्तां मन्यमानः वयस्य, परित्रायतामित्युच्चैराचक्रन्द । राजा परिदेवनं श्रुत्वोपसृत्य च निपुणं यावत्पश्यति तावत्सा सागरिका, न वासवदत्तेति तत्त्वतो ज्ञातवान् ।

अत्रान्तरे चरणपतितमार्यपुत्रमप्रसाद्यागच्छन्त्या मया न साधु कृतमित्यनुशयमापन्ना वासवदत्ता तमनुनेतुं प्रत्याययौ । सा तु सागरिके, सहजाभिजात्यजनिता सेवैव देव्याः, परं प्रेमाबन्धवि-

वर्धिताधिकरसा प्रीतिस्तु या सा त्वयीति सागरिकामुद्दिश्य भणंतं भर्तारमुपसृतवती। तां पुनरायातां दृष्ट्वा तस्याः प्रसादनमशक्यमिति ज्ञात्वा देवि, वेषसादृश्येन वञ्चिता वयम्। तत्क्षम्यतामित्युदीर्य पादयोः पपात। ततस्तत्रगतेन तेनैव लतापाशेन कुटिलमतिं सागरिकासमागमरूपस्य भर्तृमनोरथस्यापादकं तं ब्राह्मणं बद्ध्वा सागरिकामग्रतः कृत्वा वासवदत्ता जगाम। ततः सागरिकोज्जयिन्यां प्रेषितेति लोकप्रवादं कृत्वार्धरात्रे कुत्र सा नीता देव्येति न जज्ञे। सागरिकागतोत्कण्ठया पर्याकुलो वत्सो यावत्तिष्ठति तावत्कोसलोच्छित्तये गतवता रुमण्वता जिताः कोसला इति वार्तामधिगम्य समाहितान्तःकरणो बभूव।

एतस्मिन्नेवान्तरे सम्बरसिद्धिर्नाम कश्चिदैन्द्रजालिको यौगन्धरायणप्रयुक्त आगत्य देव, मम खेलनं द्रष्टव्यमिति प्रार्थयामास। राज्ञानुज्ञातः स पिच्छिकां भ्रमयन्ब्रह्माणमिन्द्रं विष्णुं दिव्यनारीः सिद्धचारणांश्च क्षणेन दर्शयामास। दृष्ट्वा तद्बन्धनान्मुक्तो वसन्तकस्तमपवार्याह। अरे, यद्यमुना परितुष्टेन कार्यं तर्हि दर्शय सागरिकामिति। अत्रान्तरे सिंहलेश्वरेण प्रहितो वसुभूतिर्वत्सस्य कञ्चुकिना बाभ्रव्येण सह द्रष्टुमागतः। ततो विश्रम्यतामिदानीमिति निर्दिष्ट ऐन्द्रजालिकः पिच्छिकां भ्रमयित्वैकं खेलनं मेऽवश्यं दर्शनीयमिति संप्रार्थ्य निश्चक्राम। आगतयोस्तयोरुपचारकुशलप्रश्नानन्तरं वसुभूतिर्विज्ञापयामास। देवाय प्रतिपादयितुमानीयमाना स्वामिनो दुहिता रत्नावली पोतभङ्गात्सागरे निमग्नेति। संकथाव्यापृतेषु सर्वेष्वन्तःपुरेऽग्निरु-

ऽस्थित इति महान्कोलाहल उद्बभूव । ततो वासवदत्ता निर्घृणया मया निगडसंयमिता सागरिका विपद्यते तत्परित्रायतामार्यपुत्रः इत्युज्जगार । श्रुत्वैतद्वत्सः पतङ्गवृत्तिर्भूत्वाग्निं प्रविवेश । तं वासवदत्तान्वगच्छत् । ततो वसुभूतिबाभ्रव्यौ राज्ञो वयस्यश्च सर्वेऽपि वह्निप्रवेशं चक्रुः । राज्ञावलम्ब्य बहिरानीतायां सागरिकायां वह्निः प्रशशाम । ततः किं न्विदमिन्द्रजालमिति सर्वे शशंकिरे । यदा च सागरिका बहिरानिन्ये तदा वसुभूतिबाभ्रव्याभ्यां प्रत्यभिज्ञाता सा । या सागरिका सैव रत्नावली स्वभगिनीति ज्ञात्वा वासवदत्ता तस्या बन्धनान्यपानाययत् । यदा सर्वे सुखमुपाविशंस्तदा यौगन्धरायणस्तत्र प्राप्तः स्वामिनोऽभ्युदयहेतुकं सर्वं तेनानिवेद्य यत्कृतं तद्दाचख्यौ । ततो वासवदत्ता स्वकीयैराभरणैरलंकृत्य सागरिकां हस्ते गृहीत्वा देवीशब्दभाजं च तां कृत्वार्य पुत्र, प्रतीच्छेमां रत्नावलीमिति तामापादयामास । एवं सर्वेऽपि कृतिनो बभूवुः ।

Notes and Meanings.

सिद्ध *m* A prophet, a man of supernatural powers or faculties, ( of these सिद्धयः eight are usually enumerated; but twenty-six others are sometimes added. e. g. दूरश्रवण, सर्वज्ञत्व, मनोयायित्व, वह्निस्तंभ, जलस्तंभ, वायुस्तंभ, क्षुत्स्तंभ, पिपासास्तंभ, निद्रास्तंभ &c. ).

लावाणिक or लावणक *m.* The name of the place where the first palace of the king वत्स was burnt. It must have been somewhere on the south bank of the यमुना near its confluence with the भागिरथी.

पोतभंग or यानभंग *m.* A ship-wreck.

दारुफलक *n.* A plank, board.
प्रत्यभिज्ञान *n.* A token of recognition.
अकृत्रिम *adj.* Not affected, natural.
व्याज *n.* A pretext.
भाव *m.* Love.
विग्रह *m.* Body.
चित्रफलक *n.* A painting-board.
उदयन *m.* Vatsa's other name. The बृहत्कथा describes उदयन, as the son of सहस्रानीक, the son of शतानीक, the son of जनमेजय, the son of परीक्षित्, the son of अभिमन्यु, the son of अर्जुन.
समुद्गक *m.* A box, casket.
वर्तिका *f.* A brush, pencil.
प्रतिकृति *f.* A picture, painting.
मंदुरा *f.* A stable, a cage.
आशा *f.* A quarter, region.
शाखामृग *m.* A monkey.
कीश *m.* A monkey.
लालित *adj.* Faded.
पिशुन *adj.* Indicating.
अनिह्लादिन् *adj.* Not sounding; not pealing.
दाक्षिण्य *n.* Politeness, civility.
घुणाक्षर *n.* An accidental coincidence. The word is made up of घुण and अक्षर. घुण is a kind of insect and अक्षर a letter; as an insect, while boring holes in wood accidentally happens to carve letters &c.
विसंवाद *m* False assertion; deceiving by a false assertion.
अशेषभुवनद्वीपदीपक *m.* The sun.
अनुशय *m.* Repentance, regret.
सहज *adj.* Natural, innate.
आभिजात्य *n* The nature of a man af noble birth, nobility.
प्रेमाबन्धेन विवर्धितः अधिकरसो यस्याः सा=Strengthened by vehement affection.

---

## TARANGA 4.

### [ The Rainy Season. ]

तृषाकुलैश्चातकपक्षिणां कुलैः प्रयाचितास्तोयभरावलम्बिनः ।

प्रयांति मन्दं बहुधारवर्षिणो बलाहकाः श्रोत्रमनोहरस्वनाः॥१॥
बलाहकाश्चाशनिशब्दमर्दलाः सुरेन्द्रचापं दधतस्तडिद्गुणम् ।
सुतीक्ष्णधारापतनोग्रसायकैस्तुदन्ति चेतः प्रसभं प्रवासिनाम्॥ २॥
प्रभिन्नवैदूर्यनिभैस्तृणांकुरैः समाचिता प्रोत्थितकन्दलीदलैः ।
विभाति शुक्लेतररत्नभूषिता वरांगनेव क्षितिरिन्द्रगोपकैः ॥३॥
सदा मनोज्ञं स्वनदुत्सवोत्सुकं विकीर्णविस्तीर्णकलापशोभितम् ।
ससंभ्रमालिंगनचुम्बनाकुलं प्रवृत्तनृत्यं कुलमद्य बर्हिणाम् ॥४॥
निपातयन्त्यः परितस्तटद्रुमान्प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः सुदुष्टा इव जातविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम्॥
तृणोत्करैरुद्गतकोमलांकुरैर्विचित्रनीलैर्हरिणीमुखक्षतैः ।
वनानि वैन्ध्यानि हरन्ति मानसं विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥६॥
विलोलनेत्रोत्पलशोभिताननैर्मृगैः समन्तादुपजातसाध्वसैः ।
समाचितासैकतिनी वनस्थली समुत्सुकत्वं प्रकरोति चेतसः ॥७॥
विपाण्डुरं कीटरजस्तृणान्वितं भुजंगवद्वक्रगतिप्रसर्पितम् ।
ससाध्वसैर्भेककुलैर्निरीक्षितं प्रयाति निम्नाभिमुखं नवोदकम् ॥८॥
विपत्रपुष्पां नलिनीं समुत्सुका विहाय भृंगाः श्रुतिहारिनिस्वनाः ।
पतन्ति मूढाः शिखिनां प्रनृत्यतां कलापचक्रेषु नवोत्पलाशया॥९
वनद्विपानां नववारिदस्वनैर्मदान्वितानां ध्वनतां मुहुर्मुहुः ।
कपोलदेशा विमलोत्पलप्रभाः सभृंगयूथैर्मदवारिभिश्चिताः ॥१०॥

मुदित इव कदम्बैर्जातपुष्पैः समन्ता-
त्पवनचलितशाखैः शाखिभिर्नृत्यतीव ।
हसितामिव विधत्ते सूचिभिः केतकीनां

नवसलिलनिषेकाच्छिन्नतापो वनान्तः ॥ ११ ॥
नवजलकणसंगाच्छीततामादधानः
कुसुमभरनतानां लासकः पादपानाम् ।
जनितरुचिरगन्धः केतकीनां रजोभिः
परिहरति नभस्वान्प्रोषितानां मनांसि ॥ १२ ॥
जलधरविनतानामाश्रयोऽस्माकमुच्चै-
रयमिति जलसेकैस्तोयदास्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभिः
समुपजानितताप ह्लादयन्तीव विंध्यम् ॥ १३ ॥

## ग्रीष्मवर्णनं

निशाः शशांकक्षतनीलराजयः क्वचिद्विचित्रं जलयंत्रमंदिरम् ।
मणिप्रकाराः सरसं च चंदनं शुचौ प्रिये यांति जनस्य सेव्यताम् ॥
मृगाः प्रचण्डातपतापिता भृशं तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता निरीक्ष्य भिन्नांजनसंनिभं नभः ॥ २॥
हुताग्निकल्पैः सवितुर्गभस्तिभिः कलापिनः क्लांतशरीरचेतनाः ।
न भोगिनं घ्नंति समीपवर्तिनं कलापचक्रेषु निवेशिताननम् ॥३
तृषा महत्या हतविक्रमोद्यमः श्वसन्मुहुर्भूरिविदारिताननः ।
न हन्त्यदूरेपि गजान्मृगेश्वरो विलोलजिह्वश्चलिताग्रकेसरः ॥४॥
विशुष्ककण्ठाहतशीकराम्भसो गभस्तिभिर्भानुमतोभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो न दन्तिनः केसरिणोपि बिभ्यति॥५॥
सभद्रमुस्तं परिशुष्ककर्दमं सरः खनन्नायतपोत्रमण्डलैः ।

रवेर्मयूखैरभितापितो भृशं वराहयूथो विशतीव भूतलम् ॥ ६ ॥
विवस्वता तीव्रतरांशुमालिना सपंकतोयात्सरसोभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः फणातपत्रस्य तले निषीदति ॥ १० ॥
सफेनलालावृतवक्त्रसंपुटं विनिःसृतालोहितजिह्वमुन्मुखम् ।
तृषाकुलं निःसृतमद्रिगह्वराद्गवेषमाणं महिषीकुलं जलम् ॥ ७ ॥

श्वसिति विहगवर्गः शीर्णपर्णद्रुमस्थः
कपिकुलमुपयाति क्लान्तमद्रेर्निकुञ्जम् ।
भ्रमति गवययूथः सर्वतस्तोयमिच्छ-
ञ्छरभकुलमजिह्मं प्रोद्धरत्यम्बु कूपात् ॥ ९ ॥

पटुतरदवदाहोच्छुष्कसस्यप्ररोहाः
परुषपवनवेगोत्क्षिप्तसंशुष्कपर्णाः ।
दिनकरपरितापक्षीणतोयाः समन्ता-
द्विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः ॥ १० ॥

ज्वलति पवनवृद्धः पर्वतानां दरीषु
ध्वनति पटुनिनादः शुष्कवंशस्थलीषु ।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
क्षपयति मृगवर्गं प्रान्तलग्नो दवाग्निः ॥ ११ ॥

गजगवयमृगेन्द्रा वह्निसंतप्तदेहाः
सुहृद इव समंताद्द्वन्द्वभावं विहाय ।
हुतवहपरिखेदादाशु निर्गत्य कक्षात्
विपुलपुलिनदेशां निम्नगां संविशंति ॥ १२ ॥

**कालिदासः— ऋतुसंहारः**

## Notes and Meanings.

तृषाकुल *adj*. पिपासया व्याकुलः Oppressed with thirst.
तोयभर *m*. The freight of water.
बलाहक *m*. A cloud.
मर्दल *m*. A kind of battle-drum. रणवाद्यविशेषः ।
गुण *m*. A bow-string.
तुद् *conj*. 6 P., to wound. प्रोत्थितानि निर्गतानि यानि कंद-लीनां दलानि पत्राणि तैः ।
इन्द्रगोपक *m*. A kind of insect.
जातः उत्पन्नो विभ्रमः शृंगारादि-चेष्टाभेदो यासां ताः नदीपक्षे स-मुत्पन्नभ्रमविशिष्टाः ।
साध्वस *n*. Fear.
निम्नाभिमुखं *adv*. Towards a low region.
लासक *m*. A contact. संसर्गवा-न् ।
मणिप्रकार *m*. Various kinds of jems.
कलापचक्र *n*. The circle of feathers.
दूरात् विदारितं आननं येन सः।
पोत्रमंडल *n*. The long snout-orbs.
लाला *f*. Saliva.
द्वंद्वभाव *m*. Enmity.

---

### TARANGA 5.

[The parrot वैशंपायन narrates his own account to the King commencing from the Kirâtas' hunting expedition.]

अनन्तरं च सरभसमितो गजयूथपतिलुलितकमलिनीपारिमल इतः । क्रोडकुलदृश्यमानभद्रमुस्तारसामोद इतः करिकलभभज्य-मानसल्लकीकषायगंध इतो निपतितशुष्कपत्रमर्मरध्वनिरितो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिरितो मृगकद-म्बकमितो वनगजकुलमितो वनवराहयूथमितो वनमहिषवृंदमितः शिखण्डिमण्डलाविरुतामितः कपिंजलकुलकलकूजितमितः कुरर-

कुलक्वाणितमितो मृगपतिनखभिद्यमानकुंभकुंजररसितमियमार्द्रपं-
कमालिना वराहपद्धतिरियमभिनवशष्पकवलरसश्यामला हरिण-
रोमंथफेनसंहतिरियमुन्मदगंधगजगण्डकण्डूयनपरिमलालीनमुख-
रमधुकरविरुतिरेषा निपतितरुधिरबिंदुसिक्तशुष्कपत्रपाटला रु-
रुपदव्येतद्द्विरदचरणमुदितविटपपल्लवपटलमेतत्खड्गिकुलक्रीडितमे-
ष नखकोटिविलिखितविकटपत्रलेखो रुधिरपाटलः करिमौक्तिक-
दलदंतुरो मृगपतिमार्ग एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी
भूमिरियमटवीवेणिकानुकारिणी पक्षचरस्य यूथपतेर्मदजलमलिना
संचारवीथी चमरीपंक्तिरियमनुगम्यतामुच्छुष्कमृगकरीषपांसुला
त्वरिततरमध्यास्यतामियं वनस्थली तरुशिखरमारुह्यतामालोक्य-
तां दिगियमाकर्ण्यतामयं शब्दो गृह्यतां धनुरवहितैः स्थीयतां
विमुच्यन्तां श्वान इत्यन्योऽन्यमभिवदतो मृगयासक्तस्य महतो
जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोला-
हलमशृणवम् ।

अथ नातिचिरादेव वनांतरव्यापिना ध्वानेन सर्वतः प्रचलि-
तमिव तदरण्यमभवदचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले
स्तिमिततामुपगते कानने मन्दीभूतभयोऽहमुपजातकुतूहलः पितु-
रुत्संगादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य सं-
त्रासतरलतारकः शैशवात्किमिदमिति समुपजातविस्मयो दि-
दृक्षुस्तामेव दिशं चक्षुः प्राहिणवम् । अभिमुखमापतितञ्चानेकस-
हस्रसंख्यमतिभयजनकमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम् ।
मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्तमानमति-

कर्कशत्वादायसमयमिव निर्मितम् कैश्चिच्छबरवृन्दैः परिवृतमनभिभवनीयाकृतिं मातंगकनामानं शबरसेनापतिमपश्यम् । अभिधानन्तु तस्य पश्चादहमश्रौषम् । आसीच्च मे मनस्यहो मोहप्रायमेतेषां जीवितम् साधुजनविगर्हितं च चरितमिति चिन्तयत्येव मयि शबरशेनापतिरटवीपरिभ्रमणसमुद्भवं श्रममपनिनीषुरागत्य तस्यैव शाल्मलीतरोरधश्छायायामवतारितकोदण्डस्त्वरितपरिजनोपनीते पल्लवासने समुपाविशत् । अन्यतमस्तु शबरयुवा ससंभ्रममवतीर्य तस्मात्सरसो वैदूर्यद्रवानुकार्यरविन्दकोषरजःकषायमम्भः कमलिनीपत्रसंपुटेन प्रत्यग्रोद्धृताश्च धौतपंकनिर्मला मृणालिकाः समुपाहरत् । आपीतसलिलश्च शबरसेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत् । अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैः शनैरभिमतं दिगन्तरमयासीत् । एकतरस्तु जरच्छबरस्तस्मात्पुलिन्दवृन्दादनासादितहरिणपिशितः पिशिताशन इवातिविकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुमूले मुहूर्तमिव व्यलंबत । अन्तरिते च तस्मिन् शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूलतापरिवेषभीषणया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि श्येन इव विहगामिषास्वादलालसः सुचिरमारुरुक्षुस्तं वनस्पतिमामूलादपश्यत् । उत्क्रान्तमिव तस्मिन्क्षणे तदालोकनभीतानां शुककुलानामसुभिः । किमिव हि दुष्करमकरुणानां यतः स तमनेकतालतुंगमभ्रंकषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपम-

विरुह्यताननुपजातोत्पतनशक्तीन्कांश्चिदल्पदिवसजातानेकैकशः फलानीव तस्य वनस्पतेः शाखासंधिभ्यः कोटरान्तरेभ्यश्च शुकशावकानग्रहीदपगतासूंश्च कृत्वा क्षितावपातयत् ।

बाणः—कादम्बरी ।

Notes and Meanings.

सरभसं *adv.* Impetuously, with great speed.
क्रोडकुल *n.* A troop of wild boars.
करिकलभ *m* A young one of an elephant.
सल्लकी *f.* A kind of tree.
वल्मीक *n.* An ant-hill.
कपिंजल *m.* A bird, the Châtaka.
कुरर *m. f.* An osprey, a species of eagle.
पद्धति *f.* A line, row.
संहति *f.* bulk, mass, quantity, collection.
खड्गिन् *m* A rhinoceros.
दंतुर *adj.* Notched, serrated, having projecting teeth.
व्रात *m.* A flock, a troop.
सैंहिकेय *m.* A son of सिंहिका, an epithet of राहु.

---

## TARANGA 6.

[ The introductory Vilâsa. ]

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ॥ १ ॥
पुरा सरसि मानसे विकचसारसालिस्खलत्-

परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्ततां ॥ २ ॥
अयि दलदरविंद स्यंदमानं मरंदं
तव किमपि लिहंतो मंजु गुंजंतु भृंगाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बांधवो गंधवाहः ॥ ३ ॥
समुपागतवति दैवादवलेहां कुटज मधुकरे मागाः ।
मकरंद तुंदिलानामरविंदानामयं महामान्यः ॥ ४ ॥
तावत्कोकिलविरसान् यापय दिवसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपिरसालः समुल्लसति ॥ ५ ॥
कमलिनि मलिनीकरोषि चेतः
किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरंदमार्मिकास्ते
जगति भवंतु चिरायुषो मिलिंदाः ॥ ६ ॥
नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यंतसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥
येनामंदमरंदे दलदरविंदे दिनान्यनायिषत ।
कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ ८ ॥
अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद्गरलं फाणिनः पुष्णासि परिमलोद्गारैः ॥९॥
पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् ।

यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् १०
उपरि करवालधाराकाराः क्रूरा भुजंगमपुंगवात् ।
अंतः साक्षाद्द्राक्षादीक्षागुरवो जयंति केऽपि जनाः ११
स्वच्छंदं दलदरविंद ते मरंदं
विंदंतो विदधतु गुंजितं मिलिंदाः ।
आमोदानथ हरिदंतराणि नेतुं
नैवान्यो जगति समीरणात्प्रवीणः ॥ १२ ॥
नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ १३ ॥
याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गंता कं प्रति पांथसंततिरसौ संतापमालाकुला ।
एवं यस्य निरंतराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥१४॥
आपेदिरेऽम्बरपथं परितः पतंगा
भृंगा रसालकुसुमानि समाश्रयन्ते ।
संकोचमंचति सरस्त्वयि दीनदीनो
मीनो नु हंत कतमां गतिमभ्युपैतु ॥ १५ ॥
गाहितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे ।
सहकार न प्रपेदे मधुपेन भवत्समं जगति ॥ १६ ॥
तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां

धारासारानपि विकिरता विश्वतो वारिदेन ॥ १७ ॥
दवदहनजटालज्वालजालाहतानां
परिगलितलतानां म्लायतां भूरुहाणाम् ।
अयि जलधर शैलश्रेणिशृंगेषु तोयं
वितरसि बहु कोऽयं श्रीमदस्तावकीनः ॥ १८ ॥
शृण्वन् पुरः परुषगर्जितमस्य हंत
रे पांथ विह्वलमना न मनागपि स्याः ।
विश्वार्त्तिवारणसमर्पितजीवनोऽयं
नाकर्णितः किमु सखे भवतांबुवाहः ॥ १९ ॥
स्थितिं नो रे दध्याः क्षणमपि मदांधेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि ।
असौ कुंभिभ्रांत्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ २० ॥
लूनं मत्तगजैः कियत् कियदपि छिन्नं तुषारार्दितैः
शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।
एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो
हा कष्टं ललिता लवंगलतिका दावाग्निना दह्यते ॥२१॥
रे चांचल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुला-
मेतामंबुधिकामिनीं व्यवसिताः संगाहितुं वा कथं ।
अत्रैवोच्छलदंबुनिर्भरमहावर्त्तैः समावर्तितो ।
यद् ग्रावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥२२॥
अन्या जगद्धितमयी मनसः प्रवृत्ति-

रन्यैव काऽपि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्यहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥ २३ ॥

आपद्गतः किल महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहन मध्यगतः समंताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥

विश्वाभिरामगुणगौरवगुंफितानां
रोषोऽपि निर्मलधियां रमणीय एव ।
लोकंपृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुताऽपि नितान्तरम्या ॥ २५ ॥

गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यांति नरा महत्वम् ।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति २६

वहति विषधरान् पटीरजन्मा शिरसि मसीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलंकं पिशुनजनं खलु बिभ्रति क्षितींद्राः २७

सत्पूरुषः खलु हिताचरणैरमंदमानंदयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारैरिंदुर्विकासयति कैरविणीकुलानि ॥

कृतमपि महोपकारं पय इव पीत्वा निरातंकः ।
प्रत्युत हंतु यतते काकोदरसोदरः खलो जगति ॥२९॥

खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशंकिभिर्लोकैर्विषेणाशीविषो यथा ॥ ३० ॥

वंशभवो गुणवानपि संगविशेषेण पूज्यते पुरुषः ।
न हि तुंबीफलविकलो वीणादण्डः प्रयाति महिमानम् ३१

अमितगुणोऽपि पदार्थो दोषेणैकेन निंदितो भवति ।

निखिलरसायनमहितो गंधेनोग्रेण लशुन इव ॥ ३२ ॥

किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतांधकारोत्करः ।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥ ३३ ॥

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खंड्यंते चंदनद्रुमाः ॥ ३४ ॥

धत्ते भरं कुसुमपत्रफलावलीनां
घर्मव्यथां वहति शीतभवां रुजं च ।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥३५॥

हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुंबिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं तनुते मनीषा ॥ ३६ ॥

दीनानामिह परिहाय शुष्कशस्या
न्यौदार्यं प्रकटयतो महीधरेषु ।
औन्नत्यं परममवाप्य दुर्मदस्य
ज्ञातोऽयं जलधर तावको विवेकः ॥ ३७ ॥

मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि॥३८॥

धूमायिता दशदिशो दलितारविंदा

देहं दहंति दहना इव गंधवाहाः ।
त्वामंतरेण मृदुताम्रदलाम्रमंजु-
गुंजन्मधुव्रत मधो किल कोकिलस्य ॥ ३९ ॥
भिन्ना महागिरिशिलाः करजाग्रजाग्र-
दुद्दामशौर्यनिकरैः करटिभ्रमेण ।
दैवे पराचि करिणामरिणा तथापि
कुत्राऽपि नापि खलु हा पिशितस्य लेशः ॥ ४० ॥
रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ।
अथवालं पापात्मन् कृतया कथयापि ते हतया ॥ ४१ ॥
वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमंत्राः॥ ४२॥
अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचंद्रिचंद्रिका ॥ ४३ ॥
पंकैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥ ४४ ॥
तत्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरंदानामंतरेण मधुव्रतम् ॥ ४५ ॥
सरजस्कां पाण्डुवर्णां कंटकप्रकरांकिताम् ।
केतकीं सेवसे हंत कथं रोलंब निस्त्रपः ॥ ४६ ॥
यथा तानं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥४७॥
संतः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् ।

आमोदो न हि कस्तूर्याः शपथेनानुभाव्यते ॥ ४८ ॥

अयि बत गुरुगर्वं मास्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यंतदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥ ४९ ॥

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरंतनमघं चुलुकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति
संगः सतां किमु न मंगलमातनोति ॥ ५० ॥

मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकांते ।
सर्पस्य शांतिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा॥५१॥

मद्वाणि मा कुरु विषादमनादरेण
मात्सर्यमग्नमनसां सहसा खलानां ।
काव्यारविंदमकरंदमधुव्रतानाम्
आस्येषु धास्यसितमां कियतो विलासान् ॥ ५२ ॥

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां विपाको मम ॥ ५३ ॥

दुर्वृत्ता जारजन्मानो हरिष्यंतीति शंकया ।
मदीयपद्यरत्नानां मंजूषेषा कृता मया ॥ ५४ ॥

**जगन्नाथपण्डितः—भामिनीविलासः**

## Notes and Meanings.

करिन् *m*. An elephant.

दिगन्ते श्रूयंते इत्यनेन करटिनां दिक्षु पलायनं सूचितं This shows that elephants leave the spot and go into the remote corners of the globe and consequently not to be seen any where.

कारुण्यास्पदं An object to be pitied. स्त्रीत्वात्सहजकारुण्योद्भवः । विप्रतिषिद्धं हि शूराणां स्त्रीमारणं.

असमशीलाः On account of their not having valour equal to them.

पांडित्य *n*. skill. सत्वानां विदारणरूपं निजकर्मणि अप्रतिहतचातुर्यं.

विकचाः प्रफुल्लाः सारसालयः कमलपंक्तयस्ताभ्यः स्खलंतो निर्गच्छन्तः परागास्तैः सुरभीकृते ।

मराल *m*. A swan.

दलदरविंद *n*. A full blown lotus.

किमपि=अनिर्वचनीयं अर्थाद् मधुरतमम्.

गंधवाह or °वह *m*. The wind.

कुटज *m*. The name of a tree.

मकरंदतुंदिल *adj*. Filled with nectar; laden with honey. कुसुमोद्भवमधुपरिपूरितानां.

मिलदलिमालः To which bees are flocked. संप्राप्तमधुपसमूहः ।

नीचः निम्नो हीनश्च । सरसहृदयः सनीराभ्यंतरः सरसांतःकरणश्च । गुणः कलशाकर्षणरज्जुः कलाप्रावीण्यं च ।

अमंदमरंद *adj*. Full of honey. परिपूर्णमकरंदे.

हा तेन मधुकरेण कुटजे कथमीहा स्पृहा तेन चक्रे इत्यन्वयः । कस्य गिरां विषयोस्तु, न कस्यापीत्यर्थः।

पाटीर *m*. Sandle, Sandlewood.

परिपाटी *f*. Conduct, behaviour.

उरीकृ To accept.

विवेके विवेचने अर्थात् पृथक्करणे.

करवाल *m*. A sword.

हरित् *f*. quarter, region. हरिदंतराणि=दिगंतराणि.

निदाघमिहिर *m*. The sun in the hot season. ग्रीष्मसूर्यः.

जीवन *n*. Life and water. जीवितं जलं च.

पद् *conj*. 4 A. with आ to go.

पंतग *m*. A bird.

संकोचमंच् *conj*. 1 P. A. to dry.

दीनदीन *adj*. very poor.

अल्पैस्तोयैरर्थात् कूपादुद्धृतैः.

प्रावृषेण्य *adj.* Belonging or relating to the rainy season. वर्षाकालिकेन.

जटाल: संघीभूत: । श्रीमदो जलसंपत्तिमद: लक्ष्मीमदोपि ध्वन्यते.

विश्वार्त्तिवारणसमर्पितजीवन: who has poured ( abundant ) water in order to remove the care of the world (consequent on famine ) ; or who has devoted his life to remove the anxiety of the world.

स्थितिं नो दध्या वसतिं मा कुरु । जटिलायां निम्नोन्नतायां । कुंभिभ्रांत्या अयं दंतीति मत्वा । खरनखैस्तीक्ष्णनखकोटिभिर्विद्रावितो विदारितो महागुरुग्रावग्रामोत्यंतगुरुशिलासमूहो येन तथाविधः । यः कुंभिबुद्ध्या शिलापुंजमपि विदारयति स त्वां कदाचिद् विदारयेदिति.

उच्छलन्नुद्गच्छन्नंबुनिर्भरो येषां तथाविधैर्महावर्तैर्महांभो भ्रमैः समावर्तित इतस्ततः प्रचालितः ।

अन्या=लोकोत्तरा Excelling or surpassing the world, beyond what is common or general, unusual, extraordinary.

महाशयानामुदारप्रकृतीनां चक्रवर्ती श्रेष्ठः ।

लोकंपृणैर्लोकतर्पकैः.

जातु *ind.* At all, ever; possibly, perhaps.

पटीरजन्मन् *m.* The sandlewood.

कैरविणी=कुमुदिनी.

निरातंक: निःशंकः।काकोदरः सर्पः।

आशीविष *m.* A serpent आश्यां दंष्ट्रायां विषं यस्य.

वंशभवः सत्कुलप्रसूतो वेणुप्रभवश्च । गुणवान् विद्याविनयशौर्यादियुक्तः तंत्र्यादिगुणवांश्च ।

तुंबीफल *n.* A kind of long gourd. भोंपळा.

निखिलेषु रसायनेषु महितः-मान्यः.

अच्छ *adj.* clear, sharp.

द्वैतं=जीवपरमात्मभेदबुद्धिः Dualism in philosophy, the assertion of two principles ( as of spirit and matter, God and the universe, &c.

कालानलं प्रलयकालीनमग्निं । अद्धा तत्वतः ।

दीनानां शुष्कशस्यानि परिहाय महीधरेष्वौदार्यं प्रकटयतः परममौन्नत्यमवाप्य दुर्मदस्य तावकी विवेको ज्ञातः इत्यन्वयः ।

मलिने कृष्णवर्णे कपटवति च । रागस्ताम्रत्वमनुरागश्च । विकसितवदनां प्रफुल्लसरोजां सहासवदनां च । अनल्पजल्पे सततगुंजारवकारिणि बहुभाषणे च ।

करजाग्र *n.* The sharp points of nails.

पराच् *adj.* Turning the back upon, hence adverse.

चंदिर *m.* The moon.

किमपि=लोकोत्तरं.

रोलंब *m.* A bee. सरजस्कां पुष्परजोयुक्तां, रजस्वलामिति च ध्वन्यते। कंटकप्रकरांकितां कंटकसमूहाचितां, पुलाकितामिति च ध्वन्यते।

मौलिना श्रेष्ठेन स्वजनकं कस्तूरीमृगम्।

चुकुलीकृ. to drink.

वाचंयमाः मूकाः। कमलाविलासरूपा या मदिरा तयोन्मीलन्नुत्पद्यमानो यो मदस्तेनाघूर्णिता भ्रांताः। लास्यं नृत्यं। कामालसानां स्ववींमानां अप्सरसां अधरमाधुरीम्। अधरयंस्तिरस्कुर्वन्। वाचां विपाको वाक्प्रौढिः।

मंजूषा *f.* A box.

---

## TARANGA 7.

[ Vasavadatta relates her story to Kandarpaketu. ]

आर्यपुत्रापुण्याया मम मन्दभाग्यायाः कृते महाभाग उज्झितराज्य एकाकी प्राकृतजन इव वाङ्मनसयोरगोचरं दुःखमनुबभूव। अथोपवासादिना कृशतरो मूलफलादिनार्यपुत्र आहारं करोतीति विचिन्त्य फलान्वेषणायोपवनतरूनवलोकयन्ती कतिपयनल्वगोचरमगच्छम्। क्षणेन च तरुगुल्मान्तरितक्रियमाणकायमानिकनिकेतनं विरच्यमानश्वेरगृहमवतार्यमाणकण्ठारकमारभ्यमाणपटकुटीकं व्यवस्थाप्यमानवेश्यानिवेशं श्रूयमाणतुरगहेषाशतं वाद्यमानविश्रमढक्काशतपुष्करमन्विष्यमाणस्वादुसलिलाशयमुद्दिश्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम्। किमयं ममान्वेषणाय तातस्य व्यूहः समायात आहोस्विदार्यपुत्रस्येति विचारयन्तीं मां प्रति चारकथितवार्तः सेनापतिर्धावितः। ततः किरा-

तसेनापतिस्तादृश एव सेनान्वितो मृगयागतः सोऽपि धावितः। अनन्तरं चिन्तितं मया यद्यहमार्यपुत्राय कथयामि तदा स एकाक्येभिरेव हन्तव्योऽथ न कथयामि तदैभिरहं घातनीयेति चिन्ताक्षण एव द्वयोः सेनयोर्युद्धमभवदेकामिषलुब्धयोर्गृध्रयोरिव। ततः प्रवृत्तप्रतिशरासनशरासारदुर्दिनहृतदिनकरकिरणे रणकर्मविशारदद्विरददन्तद्वयोत्क्षिप्तसुभटक्षणाश्लिष्यमाणविद्याधरविभ्रमे समरदर्शनसञ्चरदनेकनभश्चरचारणचक्रवाले वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारुप्रचारे चारुभटखड्गखण्डितद्विरदपादसमाप्तपिशाचीकर्णोलूखलाभरणकौतुके समुत्पतदतिनिनदनान्दीके कान्दिशीकभीरुणि रणखले शृगालप्रार्थनीयेष्वामिषपिण्डेष्विव जिह्मगदष्टेष्विव शरीरेष्वनास्थां कलयन्तः समं द्विषां धनुषां च जीवाकृष्टिं योधाश्चक्रुः। त्यागिन इव दानवन्तो मार्गणसम्पातमसहन्तः समृद्धविलासिन इव शृंगारशोभिताः सहेमकक्षाश्च सदारामा इव कदलीराजिताः साद्विजाश्च निशा इव नक्षत्रमालोपशोभिता दिवसा इवोल्लसत्पुष्करा महामृगा बभुः। उत्क्षिप्ता इव क्षमां मुञ्चन्तः पयोधय इवावर्तशोभिताः सोर्मयश्चोद्यानदेशा इव समल्लिकाक्षाः कुलगृहा इवाभिनवभाण्डहारिणो रत्नाकरा इव सदेवमणयो लेखा इव सेन्द्रधृतयस्तुरङ्गाश्च विरेजुः। कर्णाभ्यां श्रुतपरपरिवादाभ्यां खलोदयसाधुविपत्तिसाक्षिभ्यामक्षिभ्यां मूर्ध्ना चास्थानेऽपि नमता विमुक्तोऽहमिति हर्षादिव ननर्त चिरं कबन्धः। ततः कृतपरिहासेनेव चक्षुः पिदधता परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता सोन्मादेनेव वायुवेग-

विक्षिप्तेन पलितङ्करणेनेव सुरयोषितामन्धंकरणेनेव योधानां तिमिरेणेव समरप्रदोषस्य पतितेनेव विमुक्तगोत्रेण मीमांसकदर्शनेनेव तिरस्कृतादिगम्बरदर्शनेन सत्पुरुषेणेव विष्णुपदावलम्बिना रणजेन रजसा जजृम्भे । कश्चिद्राम इव रावणवधमकरोत् कश्चित् कृष्ण एव नरकच्छेदमकार्षीत् कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचनदर्शनोऽभवत् कश्चित् क्षणपक इव कटावृतो बभूव कश्चिदाशङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश कश्चित् शरतल्पगतो भीष्म इव चिराय श्वसन्नासीत् कश्चित् कर्ण इव विक्लवीकृतसर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं पतत्पताकं च्युतचापचामरापीडं स्खलत्खड्गं निधनमवाप सैन्यम्।

अनन्तरं यस्याश्रमस्तेन मुनिना पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्नोऽतः शिलामयी भवेति शप्ताहम्। क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्। ततः कन्दर्पकेतुः समागतेन मकरन्देन वासवदत्तया च सह स्वपुरं गत्वा यथाहृदयाभिलषितानि सुखान्यनुभवन् कालं निनाय।

सुबन्धुः—वासवदत्ता.

## हूणावस्कंदनप्रस्थितस्य सहानुजराज्यवर्द्धनस्य

अथ कदाचित् राजा राज्यवर्द्धनं कवचधरमाहूय हूणान् हन्तुं हरिणानिव हरिः हरिणेशकिशोरं अपरिमितबलानुयातं चिरन्तनैरमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसरं उत्तरा-

पथं प्राहिणोत् । प्रयान्तं च तं देवो हर्षः कतिचित्प्रयाणकानि तुरङ्गैरनुवव्राज । प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि, वर्तमानो नवे वयसि विक्रमरसानुरोधिनि, केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषूत्कण्ठमानवनदेवताकटाक्षांशुशारितशरीरकान्तिः क्रीडन्मृगयां मृगलोचनः कतिपयान्यहानि बहिरेव व्यलम्बत । चकार चाकर्णाताकृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिरेव दिवसैर्निःश्वापदान्यरण्यानि ।

एकदा तु वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दावहुतभुजा दह्यमानं केसरिणमद्राक्षीत् । तस्मिन्नेव च दावदहने सहसा समुत्सृज्य शावकान् उत्प्लुत्यात्मानं पातयन्तीं सिंहीमपश्यत् । आसीच्चास्य चेतसि लोके हि लोहेभ्यः कठिनतरः खलु स्नेहमयः बन्धनपाशः यदाकृष्टास्तिर्यञ्चोऽप्येवमाचरन्तीति । प्रतिबुद्धस्य चास्य मुहुर्मुहुः दक्षिणेतरमक्षि पस्पन्दे, गात्रेष्वकस्मादेव च वेपथुर्विपप्रथे, निर्निमित्तमेवान्तर्बन्धनस्थानाच्चचालेव हृदयं, अकारणादेवाजायत गरीयसी दुःखासिका । किमिदमिति च समुत्पन्नविविधविकल्पविमथितमतिः अपगतधृतिः चिन्तावनमितवदनः स्तिमिततारकेण चक्षुषा समुद्विग्नमानस्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षोणीम् । अह्नि च तस्मिन् शून्येनैव चेतसा व्यक्रीडन्मृगयाम् । आरोहति च हरितहये मध्यमह्नः भवनमागत्य उभयतो मन्दमन्दसंवाह्यमानतनुतालवृन्तः क्षितितलवितताम् अतिशिशिरमलयजरसलव-

लुलितवपुषं इन्दुधवलोपधानधारिणीं वेत्रपाट्टिकां अधिशयानः साशंक एव तस्थौ ।

अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं श्रमातपाभ्यामारोप्यमाणकायकालिमानम् अन्तर्गतेन शोकशिखिना अंगारतामिव नीयमानं, अतित्वरात्ततरःपदोद्धूयमानधूलिराजिव्याजेन राजवार्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानं, अभिमुखपवनप्रेंखद्धिततोत्तरीयकर्पटप्रान्तवीज्यमानोभयपार्श्वं अतित्वरया कृतपक्षमिव आशुपरापतन्तं, प्रेर्यमाणमिव पृष्ठतः स्वाम्यादेशेन, आकृष्यमाणमिवपुरस्तादायतैः श्रमश्वासमोक्षैः, स्विद्यल्ललाटतटत्रटमानप्रतिबिम्बेन कार्य्यकौतुकादपह्रीयमाणलेखमिव भास्वता, सम्भ्रमभ्रष्टैरिवेन्द्रियैः शून्यीकृतशरीरम्, लेखार्पितप्रयोजनगौरवादिव समेऽपि वर्त्मनि शून्यहृदयतया स्खलंतं, अकालमेघशकलमिव पतिष्यतो दुर्वार्तावज्रस्य, धूमपल्लवमिव ज्वलिष्यतः शोकज्वलनस्य, बीजमिव फलिष्यतो दुष्कृतशालेः, अनिमित्तभूतं दीर्घाध्वगं कुरंगकनामानमायान्तमद्राक्षीत् ।

दृष्ट्वा च पूर्वानिमित्तपरम्पराविर्भावितभीतिरभिद्यत हृदयेन । कुरंगकस्तु कृतप्रणामः समुपसृत्य प्रथमं आननलग्नं विषादमुपनिन्ये, पश्चाल्लेखम् । तञ्च देवो हर्षः स्वयमेवावाचयत् । लेखार्थेनैव च सह गृहीत्वा हृदयेन संतापं आविग्नरूपोऽभ्यधात्, कुरंगक किं मान्द्यं तातस्येति । स चक्षुषा बाष्पजलबिन्दुभिर्मुखेन चाक्षरैः क्षरद्भिर्युगपदाचचक्षे देव दाहज्वरो महानि-

ति। तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल। कृताचमनश्च जनयितुरायुष्कामोऽपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत्। अभुक्त एवोच्चचाल। दापय वाजिनः पर्याणमिति पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम्। वेपमानहृदयश्च ससम्भ्रमप्रधावितपरिवर्द्धकोपनीतमारुह्य तुरंगममेकाक्येव प्रावर्तत।

बाणः—हर्षचरितम्

Notes and Meanings.

प्राकृतजन इव Like a low man. नीचजन इव.

वाङ्मनसयोरगोचरं What is beyond the cognizance of the mind and speech (*i* e. senses), imperceptible by the senses. वाक्च मनश्च=वाङ्मनसे तयोः वाङ्मनसयोः। "न दधिपय आदीनि" The groups of compounds falling under the category of दधिपयस् &c. do not constitute the समाहारद्वंद्व.

°अगोचरं दुःखमनुबभूव His hard ships had transcended the powers of speech and of conception.

नल्व *m*. A furlong, a measure of distance=400 cubits

कायमानिक *m*. A low person.

तरुगुल्मान्तरितं क्रियमाणं रच्यमान कायमानिकैः कमार इति प्रसिद्धैर्हीनजातिपुरुषैर्निकेतनं पटमण्डपं यत्र तम्।

ईश्वरगृह *n*. A tent of the general of forces.

कण्ठारक *m*. A travelling bag, portmanteau, a bag for holding clothing. कंठाळ इति दाक्षिणात्यभाषायां प्रसिद्धं ; वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रं।

पटकुटीका *f*. A small tent. राहुटी इति प्रसिद्धं.

हेषा *f*. Neighing (of a horse), whinnying.

वाद्यमानं विश्रमसूचकं ढक्काशतं पुष्करं वाद्यविशेषो यत्र तं।

ढक्का *f.* A battle-drum. नौबत इति प्रसिद्धं ।

पुष्कर *n.* A trumpet. कर्णा or शिंग इति प्रसिद्धं ।

उद्दिश्यमान उत्पाद्यमानो विपण्यां पण्यवीथिकायां केतुर्यत्र ।

सेनासान्निवेश *m.* The encampment of an army सेनाशिबिर: ।

व्यूह *m.* The military array.

चारकथितवार्त: Who had been forewarned by his emissaries or scouts.

तादृश एव=चारकथितवृत्तात: ।

प्रवृत्तो य: प्रतिशरासनात् शत्रुधनुष: शरासारो बाणधारासंपातस्तेन दुर्दिनं मेघच्छन्नदिनं तेन हृतदिनकरकिरणे सति ।

चक्रवाल *n.* A circle, a ring, crowd.

चारुभटखंडितांद्विरदपादेन समाप्तं सम्यक् प्राप्तं पिशाच्या: कर्णे यदुलूखलाभरणं तदेव कौतुकं यत्र.

कांदिशीक *adj.* Fled away through fear. A timid fellow.

जिह्मग *m.* A serpent.

महामृग *m.* An elephant.

उत्क्षिप्ता इवाव्यवस्थितचित्ता इव क्षमां शांतिं पृथ्वीं च ।

समरप्रदोषस्य रणरजनीमुखस्य । पतितेन इव महापातकिनेव विमुक्तगोत्रेण । गोत्रं वंश:, गोत्रा पृथ्वी, आशंकित ऊर्वोर्भंगो येन । पक्षे उरुर्महान् भंग: पराजय: ।

हरिणेशकिशोर *m.* whelp of a lion. स्वशावकं, बालसिंहं.

अपरिमितबलानुयातं Accompanied by a vast army. अपरिमितैरसंख्यैर्बलै: सैन्यैरनुयातं कृतानुसरणं, पक्षे अतुलितेन शरीरसामर्थ्येन अन्वितं ।

महासामंत *m.* A feudatory chief.

कतिचित्प्रयाणकानि For several stages.

विक्रमरसानुरोधिनि नवे वयसि वर्तमान: Who was full of youthful vigour and was of an age at which adventure is much liked. विक्रमे पराक्रमे यो रस: प्रीतिस्तमनुरुध्यते न त्यजतीति विक्रमरसानुरोधि तस्मिन् वीररसच्छंदिनीत्यर्थ: ।

शारित *adj.* Darkened.

उत्कण्ठमानानां राजकुमारदर्शने जातौत्सुक्यानां स्वोपजीव्यपशुहनना शंकया क्षुभितचित्तानामिति वा । वनदेवतानां कटाक्षेषु अपांगदृष्टिषु ये अंशव: प्रभा: तै: शारिता शबलीकृता शरीरकांतिर्यस्य ।

वासतेयी *f.* A night. वसतौ साधु: वासतेयी ।

दुःखासिका *f.* Very painful and dejected mood of mind in which a man takes a particular turn or order of sitting. आसनमासिका, दुःखेन आसिका दुःखासिका; दुःखेन पर्यायेण आसनं दुःखासिका इति वाचस्पतिपादाः । दुःखासिका अरतिरिति शंकरः । दुःखासिकापि भाविदुःखस्य लिंगं ।

वेत्रपट्टिका *f* A cane-bed.

मेचक *adj.* Dark.

चीरिका *f.* The hem of an under garment.

अतित्वरया शैघ्र्यातिरेकेण आत्तं गृहीतं तरो वेगो याभ्यां ते ये पदे ताभ्यां उद्धूयमानायाः उत्पतंत्याः धूलिराज्याः रजःपटलस्य व्याजेन छलेन राज्ञो वार्त्तायाः श्रवणे यत्कुतूहलं औत्सुक्यं वर्द्धिष्यते अस्याः तथा । विततोत्तरीयकर्पटस्य लंबप्रावारवस्त्रस्य ।

परापतंतं *pres-p.* coming.

स्विद्यति ललाटतटे भालपट्टे घटमानो जायमानः स्वेदसलिलोष्मातिशेषः । प्रतिबिंबः यस्यतेन तथोक्तेन संक्रांतप्रतिमेनेत्यर्थः ।

दृष्ट्वा च—हृदयेन When the prince saw him his heart broke asunder, fear being aroused in it by the series of bad omens described above.

परिबर्ह *m.* Wealth, furniture, property. राजसुखोचितोपकरणसामग्री ।

पर्याण *n.* A saddle.

परिवर्द्धक *m.* A groom.

---

## TARANGA 8.

### Draupadí, Bhíma and Yudhishthira.

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥१॥
भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥२॥
अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतंगजेन स्रगिवापवर्जिता ॥३॥

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥
अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥६॥
पुराधिरूढः शयनं महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥
पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥७॥
अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥८॥
द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसंपदां पराभवोऽप्युत्सव एव मानिनाम् ॥ ९ ॥
विहाय शान्तिं नृप धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥
पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥
अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥
न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपाधि संधिदूषणानि ॥
विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसाम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १४ ॥

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसंपत्प्रवणः परिक्षयः ॥ १५ ॥
अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ १६ ॥
अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ १७ ॥
क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ १८ ॥
प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ १९ ॥
अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं तममालम्बनमात्मपौरुषम् ॥ २० ॥
विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ २१ ॥
मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयंहतैः ।
लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ २२ ॥
अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ २३ ॥
ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मना जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २४ ॥
किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ २५ ॥

कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २६ ॥
इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २७ ॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृष्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥२८॥
अभिवर्षति योऽनुपालयन्विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥२९॥
शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ३० ॥
मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥ ३१ ॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥ ३२ ॥
शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम् ।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥ ३३ ॥
अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥ ३४ ॥
बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसंपदः ॥३५॥
समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥ ३६ ॥

क चिराय परिग्रहः श्रियां क च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः ॥ ३७ ॥
श्रुतमप्यधिगम्य ये रिपून्विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय संपदामयशस्ते खलु चापलाश्रयम् ॥ ३८ ॥
उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ ३९ ॥
असमापितकृत्यसंपदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४० ॥
मदमानसमुद्धतं नृपं न वियुंक्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४१ ॥
अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसंततिः ।
सुकरस्तरुवत्सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ४२ ॥
अणुरप्युपहन्ति विग्रहः प्रभुमन्तः प्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोनलः ॥ ४३ ॥
मतिमान्विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसंपदः ॥ ४४ ॥
लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥ ४५ ॥

॥ भारविः-किरातार्जुनीयम् ॥

Notes and Meanings.

सिद्धि *f.* Prosperity, success. वृद्धिरूपां ।

ततो द्विषभ्यः आगताः ततस्त्याः Arising from the enemies

having its source from the foes.

अपाकृति *f.* Perturbation, excitement, change of mind; an insult. विकारान् ।

मन्युव्यवसाययोः क्रोधोद्योगयोर्दीपिनीः संवर्धिनीर्गिरः &c.

भवादृशाः=पंडिता इत्यर्थः ।

अधिक्षेप *m.* Abuse, contempt; dismissal.

निरस्तनारीसमयाः दुराधयः &c. Nevertheless that distressing anxious reflection which has compelled me to forsake the female bashfulness forces me, as it were, to address you again.

धामन् *m.* Valour, prowess, might; lustre, spendour.

अखंडं *adv.* Without any break.

मदच्युत् *adj.* Distilling ichor, ( as an elephant in rut ).

शठाः धूर्तास्तथाविधानकुटिलानसंवृतांगानवर्मितशरीरान्निशिता इषव इव घ्नन्ति हि; for " आर्जवं हि कुटिलेषु न नीतिः " ।

जातहार्देन जातस्नेहेन सता जनस्य आदरो न, वि[illegible]पा द्विषता च सता आदरो न । अमर्षहीनस्य रागद्वेषौ अकिंचित्करत्वादगण्यौ इत्यर्थः ।

अदभ्रदर्भा *f.* Covered with plenty of grass.

वैतालिकैर्विबोधयमे *Cf.* इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः । सपदि विगतनिद्रस्तल्पमुज्झांचकार ।

अशिव *adj.* Foretelling a bad omen or ill luck. *Cf.* भास्करश्च दिशमध्युवास यां तां श्रिताः शिवाः प्रतिभयं ववासिरे । शिवारुतैः क्रोष्टुवासितैः ।

अन्धस् *n.* Food, boiled rice.

परैति प्राप्नोति । उभयमपि क्षीयत इत्यर्थः ।

रामणीयक *n.* Beauty, loveliness.

अनारत *adv.* Always, often ; eternally. अजस्रं ।

राजशिरःस्रजां=नमद्भूपालमौलिमालानां ।

आलूनशिखेषु=छिन्नाग्रेषु ।

बर्हिस् *m. n.* A bed or layer of Kusâ grass.

द्विषंतो निमित्तं यस्याः सा ।

परैः शत्रुभिरपर्यासिता पर्यावर्तिता वीर्यसंपद्येषां तेषां मानिनां पराभवो विपदप्युत्सव एवेति ।

निःस्पृहा मुनयः शत्रून्कामादीनवधूय निर्जित्य शमेन क्रोधवर्जनेन सिद्धिं मोक्षाख्यां व्रजन्ति । भूभृ-

तरतु न । कैवल्यकार्यवद्राजकार्यं न शांतिसाध्यम् ।

निकार *m.* Disgrace, dis-respect ; defeat.

मनस्विता *f.* Self-respect. मनस्विताभिमानिता निराश्रया सती हता ।

रतिमधिकृ To take delight or pleasure in.

चिराय चिरकालेनापि । पर्येषि अवगच्छसि ।

लक्ष्मीपतिलक्ष्मन् *n.* A mark or sign of royalty, insignia of royalty, regalia. राजचिह्नं ।

जटाधरः सन्निह वने पावके संजुहुधि । पावके होमं कुरु । विरक्तस्य किं धनुषा इत्यर्थः ।

भूरिधामन् *adj.* Of a transcending valour or lustre.

सोपधि *adv.* Fraudulent. सकपटं ।

समय *m.* Stipulation, condition ; oath, agreement, treaty.

समयस्त्रयोदशसंवत्सरान्वने वत्स्यामीति. एवंरूपा संवित् ।

संधिदूषणानि विदधाति केनचिद्व्याजेन दोषमापाद्य संधिं दूषयन्ति।

उपपत्तिमत् *adj.* Right, fit, reasonable, proper. युक्तियुक्तं।

ऊर्जिताश्रयं उदारार्थं वचनं ।

अस्वंतता *adj.* Ending ill, leading to or having an unfavourable issue ; approaching the end of life. अत्यंतदुरंतः । क्षयोन्मुखः इत्यर्थः।

सुमर्षण *adj.* Easy to be borne. सुसहः । सुखेन मृष्यत इति ।

फलसंपत्प्रवण *adj.* Tending to good result, success or prosperity.

फलसिध्युन्मुखः । नह्यारा एव प्रतीकार्यौ न च क्षय एवोपेक्ष्यः । किंतु स्वंतत्वास्वंतत्वाभ्यामुभावपि प्रतीकार्यौ उपेक्ष्यौ च भवत इत्यर्थः ।

अचिरेण परस्य &c., Explain:—Considering his own policy of destroying (enemies) to be such as would take effect after a long time and of an inferior stuff, while that of his foe to be such as would take immediate effect and of decidedly superior stuff, an astute politician becomes indifferent to it ( through sheer hopelessness ) ; if otherwise he takes an immediate step ( to over throw it ).

उदेष्यतीं वर्धिष्यमाणां prospering, thriving increasing.

अनीहा *f.* Indifference, apathy, disinclination.

जननिर्वादभय *n.* Fear of public criticism or censure.

अनुपालयतां उपेक्षमाणानां ।

अनपाय *adj.* Free from loss, undiminished; freedom from loss or from wear and tear. Adjectives in this verse should be applied equally to the king and to the moon.

नय *m.* Polity, policy.

कृतपंचांगविनिर्णय: To which has been framed a settled rule consisting of five political expedients e. g. कर्मणामारंभोपाय: पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकार: कार्यसिद्धिश्चेति पंचांगानि । or according to कामंदक " सहाया: साधनोपाया । विभागो देशकालयो: विनिपातप्रतीकार: सिद्धि: पंचांग इष्यते " ।

कोशदंडयो: प्रभुशक्तेरित्यर्थ: The royal power that arises from three things, viz ,dignity (प्रभाव), consultation (मंत्र), and confidence (उत्साह). These three qualities are also each called a power. कोशदंडौ are the main stays of a kingdom.

विधेयपदेषु कार्यवस्तुषु । दक्षता क्षिप्रकारित्वमुत्साहमित्यर्थ: ।

विनिपातनिवर्तनक्षमं Able to revert any great calamity or unavoidable evil.

आलंबन *n.* A prop or support.

अविक्रम *adj.* A coward.

आयति *f.* The future, ' the long run;' following or future time.

आपदुपेतं विपन्नं । रहयति त्यजति ।

लघुता *f.* disrepect, dishonor.

निरायति *m.* One that verges to decay or ruin; miserable; अगरीयान् लघीयान् नृपश्रिय: पदं राजलक्ष्म्या आस्पदं न भवति ।

वर्तयते=वृत्तिकरोति तैरेव जीवतीत्यर्थ: ।

लघयन् *p. p.* Slighting.

अभिमानधनस्य Solely bent on wreaking vengeance on enemies वैरिनिर्यातनमात्रनिष्ठस्य ।

गत्वर *adj.* Perishable, frail.

स्थास्नु *adj.* Firm, fixed, stable, permanent, eternal.

अचिरांशुविलासचंचला *f.* Fickle like the flash of a lightning अचिरं अंशवो यस्या: साचिरांशुर्विद्युत्तस्या: विलास: स्फुरणं तद्वच्चंचला क्षणिकेत्यर्थ: ।

आनुषंगिक *adj.* Necessary as a result or consequence, inevitable. मानत्राणाय यश एव मुख्यं फलमभ्युच्चयस्तु लक्ष्मीरिति मानिनामिदमेव श्लाघ्यमित्यर्थः ।

हिरण्यरेतस् *m.* Fire.

सुखं *adv.* Willingly. आस्कंदति पादादिनाक्रमाति ।

अन्यसमुन्नति *f.* A rise of an enemy परवृद्धिं । महतः परभंजनमेव पुरुषार्थः ।

दर्शिता विक्रिया विकारो वागारंभात्मको येन तं ।

मरुतः सुतं भीमं ।

विमृष्यकारिन् *adj.* Acting after due deliberation.

नयापादिता नीतिसंपादिता ।

सुकृतः स्वभ्यस्तोऽत एव परिशुद्धो निश्चितोऽन्यत्र सुविहितः प्रवातादिदोषरहितः । अर्थदर्शनं कार्यज्ञानं वस्तुप्रतिभासनं च ।

आगस् *n.* Offence, sin, fault.

विनिपात *m.* Any great calamity.

विजितक्रोधरया जितक्रोधवेगाः ।

अदूषितायतीमक्षतोत्तरकालाम् ।

औपयिकमुपायं ।

पुरः *ind.* At first.

अविभिद्य *ger.* Without dispelling.

अंशुमत् *m.* The Sun.

शक्तिसंपदः प्रभुमंत्रोत्साहशक्तीस्तिस्त्रोऽपि हन्ति ।

समा नातिमृदुर्नात्यतितिग्मा वृत्तिर्यस्य स समवृत्तिः मनुः ।

तिग्मता sharpness, passion.

असुरक्ष *adj.* unsafe, not safe; difficult to keep safe.

बहुच्छला बहुव्याजाः बहुरन्ध्रा इत्यर्थः ।

विनी To check, curb.

जन् To impute.

चापलाश्रयं अस्थैर्यनिबंधनं ।

तितिक्षा *f.* Patience, endurance, resignation.

हतवेगं प्रतिबद्धवेगं । सर्वथा दुर्जनं संपदो विकारयंतीतिभावः ।

मूलसंतातिः प्रकृत्यादिस्वजनवर्गः ।

अपराग *m.* Hatred, ill-feeling.

विग्रहः *m. n.* A strife, quarrel; disfavour.

तरुशाखान्तनिघर्षजोऽनलः Fire produced from the friction in the interior of the branches of trees.

विनयं प्रमथ्नाति त्यजतीति विनयप्रमाथिनो दुर्विनीतस्य द्विषः ।

विपदंता अनर्थोदर्काः ।

लघुवृत्तिता *f.* Low pursuits.

अनंतरः संनिहितः ।

आपगारय *m.* The current of a river; the force of a current.

## TARANGA 9.

[ A hermit relates his story to the King. ]

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कंचिन्नयनानंदकरं सुकुमारं कुमारं राज्ञे समर्प्यावोचि । भूवल्लभ कुशसमिदानयनाय वनं गतेन मया काचिदशरण्या व्यक्तकार्पण्याश्रु मुञ्चन्ती वनिता विलोकिता । निर्जने वने किंनिमित्तं रुद्यते त्वयेति पृष्टा सा कररुहैरश्रु प्रमृज्य सगद्गदं मामवोचत् । मुने लावण्यजितपुष्पसायके मिथिलानायके कीर्तिव्याप्तसुधर्मणि निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात् । तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबलेऽसति विधेये विदेहेश्वरो जयवता रिपुणाभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत् । ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स महानिरोधः पलायिष्ट । तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताहं मद्दुहितापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव । तत्र विवृतवदनः कोपि रूपी कोप इव व्याघ्रो मामाघ्रातुमागतवान् । भीताहमुदग्रपाणिः स्खलन्ती पर्यपतम् । मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणोमर्षिणो व्याघ्रस्य प्राणान्बाणो बाणासनयन्त्रमुक्तोपाहरत् । विलोलालको बालकोपि शबरैरादाय कुत्रचि

दुपानीयत । कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने । साहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाभवम् । ततः स्वस्थीभूय भूयः क्ष्माभर्तुरन्तिकमुपातिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामीत्यभिदधानैकाकिन्यपि स्वामिनं गमिष्यामीति सा तदैव निरगात् । अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयांकुरं कुमारमन्विष्यंस्तदेकं चण्डिकामंदिरं सुंदरं प्रागाम् । तत्र संततमेवंविधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराता महीरुहशाखावलम्बितमेनमासिलतया वा सैकततले खननिक्षिप्तचरणं लक्षीकृत्य शितशरनिकरेण वानेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंदशयित्वा संहनिष्याम इति भाषमाणा मया समभ्यभाष्यन्त । ननु किरातास्तमोघोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोहं मम पुत्रकं क्वचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदन्तरमगमम् । स कुत्र गतः केन वा गृहीतः परीक्ष्यापि न वीक्ष्यते । तन्मुखालोकनेन विनानेकान्यहान्यतीतानि किं करोमि क्व यामि भवद्भिर्न किमदर्शीति । द्विजोत्तम कश्चिदत्र तिष्ठति किमेष तव नंदनः सत्यमेव तदेनं गृहाणेत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन् । तेभ्यो दत्ताशीरहं बालकमंगीकृत्य शिशिरोदकादिनोपचारेणाश्वास्य निःशंकं भवदंकमानीतवानस्मि । एनमायुष्मन्तं पितृरूपो भवानभिरक्षतादिति । राजा सुहृदापन्निमित्तं शोकं तन्नन्दनावलोकनसुखेन

किंचिदधरीकृत्य तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष। जनपतिरेकस्मिन्दिवसे तीर्थस्नानाय पक्कणनिकटमार्गेण गच्छन्नबलया कयाचिदुपलालितमनुपमशरीरं कुमारं कंचिदवलोक्य कुतूहलाकुलस्तामपृच्छत्। भामिनि रुचिरमूर्तिः सराजगुणसंपूर्तिरसावर्भको भवदन्वयसंभवो न भवति। कस्य नयनानन्दो निमित्तेन केन भवदधीनो जातः कथ्यतां याथातथ्येन त्वयेति। प्रणतया शबर्या सलीलमलापि। राजन् आत्मपल्लीसमीपे पदव्यां वर्तमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो ऽयवर्धत। तदवधार्य कार्यज्ञो राजमुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयापहारवर्मेत्याख्याय देव्यै वर्धयेति समर्पितवान्।

दण्डी—दशकुमारचरितम्.

## आर्यजनानामुत्पत्तिकथनं.

अत्र केचिद्वदन्ति। आर्यजनानां हिन्दुपदव्यपदेश्यता हि देशान्तरभवत्वं साधयति। तथा हि। पुरा किल कदाचित्समये जलप्रलयो बभूव। तत्र यद्यपि मनुष्यादयः सर्वे प्राणिनो जले निमग्नाः सन्तः पञ्चत्वमापेदिरे। तथापि काकेससनामके पर्वते कश्चिदेकः पुरुषो जीवन्नवशिष्टः। तस्य च सन्तानलतायाश्चिरकालेन प्रवर्द्धमानाया एकः प्रतानो यूरूपखण्डं प्रविवेशाऽपरश्च पारसीकदेशम्। ततश्च भूयसा कालेन पारसीकदेशमभिव्याप्नुवन् प्रवर्द्धमानः स लताप्रतानः सिन्धुनदस्योभे तटे समाश्रित्य प्रतिष्ठामलभत। एवं प्रतिष्ठितानां तत्पुरुषवंश्यानां देशनाम्ना सिन्धुपदेन व्यपदेशो

कर्त्तव्ये करणाऽपाटववशात् प्राकृतजनैर्हिन्दुपदेन व्यपदेशश्चक्रे। त एवैते भरतखण्डवास्तव्या आर्यजनाः सन्ति। न ह्येषां मूलस्थानं भरतखण्ड इति सेयं कल्पना न सर्वांशतः संभवतुलामधिरोहति। तस्य जलप्रलयस्याऽसार्वत्रिकत्वे एकस्यैव विवक्षितपुरुषस्यावशिष्टत्वासंभवात्। सार्वत्रिकत्वे तु यमाश्रित्य प्राणान् स पुरुषो दधार स एवैकः पर्वतः प्रलयपयोधिजलैर्न प्लावित इति भाषणस्य बालजनश्रवणीयतया प्रेक्षावतामश्रद्धेयत्वात्। किञ्च स्वदेशं विहाय यथाकथंचिदुद्देशवशाद्भारतं वर्षं प्रविशद्भिरनार्यैः प्रथमं सिन्धुदेशवासिभिरेवार्यजनैः परिचयः संवृत्त इति तेनैव देशनाम्ना सर्वेषामार्याणां संज्ञा व्यवहारस्तैः कृतः स्यादित्यपि कल्पयितुं शक्यते। अथेयं प्रस्तुतवार्त्ता यथाकथंचिन्मूलमासाद्यांशतस्तु प्रमाणपदवीमधिरोहति। तथा च शतपथब्राह्मणे भारतरामायणादौ च मत्स्याऽवतारकथा गीयते तत्र च कतिपयमहर्षिजनपरिवारेण मनुनाऽध्यासितां नावं निजैकशृंगनिबद्धामुद्वहता भगवता स्वीकृतमहामत्स्यरूपेण परमेश्वरेण सपरिवारो मनुः प्रलयपयोधिप्रचण्डतरंगताण्डवात् परित्रात इति। ततश्चातिक्रान्ते प्रलयकालसंकटे परमेश्वरप्रसादावाप्तसमस्तसंपत्समृद्धो मनुः पुत्रपौत्रादिवंशपरंपरया सर्वेषां जनानां मूलपुरुषः संबभूव। तन्मूलक एव च सर्वेषां द्विपदजातीनां जनानां मनुजमनुष्यमानवादिपदैः सनातनो लोकव्यवहारसंबभूवेत्याहुः। यत्तु केचिद्वदन्ति मनुष्या मनुतो जाता मनुः दैवतनूद्भवः। देवानां वसतिः स्वर्ग इति श्रुत्यादिसंमतं। ततश्चा-

वगम्यते हिमालयगिरेरुत्तरभूप्रदेशा एवार्याणां मूलोत्पत्तिस्थानम् । यतस्तत्र भूप्रदेशेषु तिबेट इतिनाम्ना प्रख्यातो भूप्रदेशोऽद्यापि विद्यते । तिबेट इति हि त्रिविष्टपशब्दस्यैवाऽपभ्रंशो भवेत् । त्रिविष्टपशब्दश्च स्वर्गपर्याय इति प्रोक्तार्थसिद्धिरिति । तत्वापाततो रमणीयं । तिबेटशब्दस्य त्रिविष्टपशब्दाऽपभ्रंशरूपत्वेपि भूलोकगतस्य तद्देशस्यार्यजनसंमतस्वर्गत्वे मानाभावात् । भूलोकादन्तारिक्षलोकाच्च पृथगेव स्वर्गलोक इत्यर्थस्य श्रुतिस्मृत्यादिसकलप्राचीनग्रन्थेषु कोशकाव्याद्यर्वाचीननिबन्धेषु च विस्पष्टमभिधानाच्च । यज्ञेश्वरदीक्षितः—आर्यविद्यासुधाकरः

## Notes and Meanings.

रसेन=रागेण Must be construed with भवोचि.

व्यक्तं कार्पण्यं दैन्यं यस्याः सा ।

लावण्ये सौंदर्यातिशये जितः पुष्पसायको मन्मथो येन तस्मिन् ।

कीर्त्या व्यापृता सुधर्मा देवसभा येन तथा =कीर्तिव्यापृतसुधर्मणि Whose fame occupied the assembly of the gods.

सीमंतिनी वधूस्तस्याः सीमंतमहोत्सवो गर्भिण्यवस्थायां अनुष्ठातव्यस्य सीमंतोन्नयनाख्यसंस्कारस्योत्सवस्तदर्थे । "चतुर्थे गर्भमासे सीमंतोन्नयनम्" इति सूत्रं । Parting the hair of a pregnant woman in the fourth, sixth or eighth month of her first pregnancy.

संख्य *n.* A battle.

निजबलेऽसति विधेये His obedient army not being on the spot. विधेयो विनयग्राही ।

कारुण्येन पुण्येन विसृष्टः Having, in consequence of his merit, been set free out of compassion

दुःखेन गंतुं शक्यो दुर्गस्तेन ।

रभसात्=वेगेन.

मूलबलाभिरक्षितावरोधः Whose harem was well guarded by the main part of the army. मूलबलं प्रधानसैन्यं तेनाभिरक्षितोऽवरोधः शुद्धांतः येन सः ।

यम or यमज *m. dual.,* The twins. सहजातौ ।

रूपिन् *adj.* In form. मूर्तः।
आघ्रातुं *Inf.* To devour, to kill. नाशयितुं।
कपिलाया गोः शवः कुणपस्तस्य क्रोडं अंकदेशं अभ्यलीयत प्रच्छन्नोऽभूत्।
बाणासनं धनुस्तदेव यंत्रं तस्मान्मुक्तः।
विलोलालक *adj.* Wearing flowing locks.
वृष्णिपाल *adj.* A shepherd. मेषपालः।
उपतिष्ठासुरुपस्थातुमिच्छुः।
एवं विधा प्रकारो यस्य तादृशो यो विजयस्तस्य सिद्धिस्तस्यै। खननेन निक्षिप्तौ भूमौ कीलितौ चरणौ यस्य।
अनेकचरणैः Must be construed with कुक्कुरबालकैः।
तमसा निबिडान्धकारेण घोरः भीषणः प्रचारः संचारः यस्मिंस्तथा।
स्थविरभूसुर *m.* An old Brahmana.
निक्षिप्य संस्थाप्य।
भवदंकं भवन्निकटं।
अवगीकृत्य दूरीकृत्य तनूकृत्य वा।
पक्कण *m.* An abode of the S'abaras.
राज्ञो गुणास्तेषां संपूर्तिस्तत्सहितः।
पल्ली *f.* A small village, especially a settlement of wild tribes; a hut, house.
पद्वी *f.* A foot-path.
व्यपदेश्यता *f.* A name, title; appellation; family, race, fame, renown.
प्रतान *m.* A branch, shoot, tendril.
अपाटववशात् Through awkwardness; on account of its inelegance; because it does not sound well.
प्रेक्षावत् *adj* Considerate, wise, prudent.
सनातन *adj.* Eternal.
प्रोक्तार्थसिद्धि *f.* A proof or support to the argument in question.
मानाभावात्=प्रमाणाभावात्।

---

## TARANGA 10.

[ The description of प्रवरपुर. ]

काश्मीरेषु प्रवरपुरमित्यास्ति मुख्यं पुराणां
यातं गौरीपरिणयविधौ साक्षितामिन्दुमौलेः।

यस्यायान्ति प्रकृतिकुटिलास्ते वितस्तातरंगाः
स्वेच्छाधावत्कलियुगगजाधोरणत्वेंकुशत्वम् ॥ १ ॥
उद्यानेभ्यः सकलभुवनाश्चर्यमाधुर्यधुर्यं
पीत्वा द्राक्षारसमिव करैर्जातसंतापशांतिः
ज्येष्ठाषाढेष्विव कमलिनीकामुको यत्र धत्ते
रत्नश्रेणीकिरणकलिकाकोमलामंशुमालाम् ॥ २ ॥
कृत्वा शैलं करतलतुलारूढमर्धेन्दुमौले-
र्हास्यज्योत्स्नां दशसु विसृजन्दिक्षु दर्पाद्दशास्यः ।
यस्मादुच्चैः स्फुरितमहसां ब्राह्मणानां निवासा-
च्छापत्रस्तस्त्वरितमगमद्दूरतः पुष्पकेण ॥ ३ ॥
उत्तुंगानां मणिगृहभुवां यत्र वातायनेषु
व्याख्याभिख्याप्रणयिनि जगद्दुर्लभे सूरिचक्रे ।
देवाः प्रोद्यद्विपुलपुलकाः किं न वर्षन्ति पुष्पै-
र्नाशंकन्ते यदि सुरगुरोस्तत्र वैलक्ष्यदीक्षाम् ॥ ४ ॥
धत्ते यस्याः स्फटिकशुचिभिः क्षालयन्त्या यशोभिः
स्थित्या गौरीगुरुरपि गिरिर्नूनमुच्चैः शिरांसि ।
गाङ्गस्पर्धोद्धुरमधुमतीसैकतोत्तंसहंसी ।
विद्यारक्षाधिकृतमकरोत्सा स्वयं शारदा यत् ॥ ५ ॥
ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानां
तस्यानेकाद्भुतगुणकथाकीर्णकर्णामृतस्य ।
यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च ॥ ६ ॥

मन्ये मन्थाचलविदलितान्निर्गता दुग्धसिंधो-
र्भूत्वा यस्मिन्नमृतलहरी सत्कवीनां वचांसि ।
प्रेमाकूतं कुवलयदृशां शीकरैः पूरयन्ती
द्राक्षाखण्डेष्वमृतकिरणापाण्डुषु स्थैर्यमाप ॥ ७ ॥
दुर्लक्षत्वं कलियुगदृशां प्रापिते ब्रह्मधाम्ना
क्षिप्त्वा विद्याविभवमखिलं यत्र विश्वासधाम्नि ।
स्थाने तत्र त्रिनयनगुरोर्निर्जने नूनमद्रेः
सा वाग्देवी भजति शमिताशेषतापा तपांसि ॥ ८ ॥
तीरद्वंद्वप्रणयिभवनव्रातवातायनस्थ-
स्वैरक्रीडोच्छलितमिथुनच्छिन्नहारावकीर्णा ।
यस्योत्संगे कुलसरिदसौ नीलकण्ठप्रसूता
धत्ते तारातिलकितनभः संगिगंगानुकारम् ॥९॥
स्नानक्रीडाव्यसनसमये कुंकुमं कामिनीनां
यत्रोत्तार्य स्तनपरिसराद्गृह्णती कांतमंके ।
ईर्ष्यामर्षादिव निरवधेर्वीचिहस्तैर्वितस्ता
कर्षत्यासां प्रतिकलमलिश्यामलान्केशपाशान् ॥ १० ॥
यस्मिन्क्वापि स्फुरति ललिता श्रीः कटाक्षच्छटासु
श्रीमद्भट्टारकमठपुरोपान्तसीमन्तिनीनाम् ।
या निःशंकं श्रुतिकुवलयस्यापलापप्रवृत्ता
भग्ना किंचित्परिमलमिलद्भृंगकोलाहलेन ॥ ११ ॥
अंकाल्लंकापतितरलिताद्याः शिला विप्रकीर्णाः
प्राप्त्यै तासां स्फटिकशिखरी वेद्मि पर्युत्सुकोपि ।

आस्ते गौरीपतिवृषखुरक्षोदचिन्हान्यपश्य-
न्यद्देहानां कलहविमुखः स्फाटिकेष्वंगणेषु ॥ १२ ॥
यक्षग्रस्ता धनपतिपुरी निष्कलंका न लंका
सातंकेव त्रिदशनगरी मेरुपृष्ठेधिरूढा ।
इत्यप्राप्यप्रतिभटतया नूनमुच्चैः सगर्वं
यत्प्रद्युम्नक्षितिधरनिभादुत्तमांगं बिभर्ति ॥ १३ ॥
काव्यं येभ्यः प्रकृतिसुभगं निर्गतं कुंकुमं च
छायोत्कर्षाद्भवति जगतां वल्लभं दुर्लभं च ।
यस्मिन्नन्तःस्थितवति जगत्सारभूते प्रयाताः
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम् ॥ १४ ॥
देवोद्यानेष्वपि तिलकतां पुण्ययोगादवाप्तै-
र्विस्मर्यन्ते न खलु निखिलाश्चर्यसारा यदीयाः ।
श्रीखण्डाम्भःस्नपितमुरलप्रेयसीगंडपाण्डु-
द्राक्षाखण्डस्तबकितलतामण्डपास्ते वनान्ताः ॥ १५ ॥
अस्त्यन्योन्यग्रथितलहरीदोलिताबन्धबन्धु-
र्मध्ये यस्य क्षपितकलुषः संगमः पुण्यनद्योः ।
यस्योत्सङ्गे हलधरकृतास्ते जयन्त्यग्रहारा
ये धर्मस्य क्षतकलिभयाः शैलदुर्गीभवन्ति ॥ १६ ॥
वैस्ततानां स खलु पयसां संगमो यत्र चर्या-
मर्यादायाः कृतयुगभुवः पात्रभूतोद्धुतश्रीः ।
दोलालीलातरलगतिषु प्रेंखिता यत्तरंगै-
रुत्संगेषु त्रिदशसुदृशां देहभाजः पतन्ति ॥ १७ ॥

तत्पर्यन्तस्थितगुणनिकामण्डपं यत्र धत्ते
धामव्योमांगणतिलकतां क्षेमगौरीश्वरस्य ।
रामा रामानुकरणविधौ यत्र नाटचप्रयोगे
योगस्थानामपि सपुलकं गात्रमासूत्रयन्ति ॥ १८ ॥
संग्रामोर्वीपरिवृढमठप्रान्तसीमन्तितोसौ
यस्मिन्नक्ष्णोर्वितरतिसुधां चन्द्रसीमाप्रदेशः ।
यत्रानन्तक्षितिपतिकृतास्ते वितस्तोपकण्ठे
याताः कान्त्या हरधवलया हारतामग्रहाराः ॥ १९ ॥
गर्जद्वातायनविततयः शास्त्रगोष्ठीवरिष्ठै-
स्ताकाष्ठील्लद्विजवसतयो यत्र नेत्रोत्सवाय ।
यासु त्रासं विदधति कलेर्दर्शनादेव विप्राः
सायं प्रातः प्रहृतहुतभुग्धूमधूम्रैः शिरोभिः ॥ २० ॥
यत्रानन्तक्षितिपगृहिणीशंकरागारपार्श्वे
तस्तुंगिम्ना त्रिभुवनमनोरंजनं गंजधाम ।
श्रुत्वा श्रुत्वा रुतमविरतं यत्र पारापतानां
दक्षाः कण्ठध्वनिषु शनकैः पौरकन्या भवन्ति ॥ २१ ॥
यत्क्षेत्रेषु स्थितिमरचयद्वल्कलं यत्सिषेवे
जाने जैत्रं किमपि तपसस्तस्य माहात्म्यमेतत् ।
तत्रत्यस्य प्रथमवयसः स्त्रीजनस्यांगकानां
यत्काश्मीरं कनकसुहृदामन्तरंगत्वमेति ॥ २२ ॥
गेहं यत्र प्रवरगिरिजावल्लभस्याद्भुतं त-
स्केषामाशां सुरपतिपुरारोपणे नातनोति
यद्यातस्य प्रवरनृपतेर्द्यां शरीरेण सार्धं

स्वर्गद्वारप्रतिममुपरि छिद्रमद्यापि धत्ते ॥ २३ ॥
दृष्ट्वा यस्मिन्नभिनयकलाकौशलं नाटकेषु
स्मेराक्षीणां मसृणकरणासंगदत्तांगहारम् ।
रम्भा स्तम्भं भजति लभते चित्रलेखा न रेखां
नूनं नाम्ये भवति च चिरं नोर्वशी गर्वशीला ॥ २४ ॥
यस्मिन्नुर्वीपतिगृहततेस्तुंगिमा वर्ण्यते किं
तस्याश्चश्चच्चतुरवनिता भूषितानेकभूमेः ।
जाने यस्यां कुसुमधनुषः स्वर्गरामामनांसि
क्रीडावातायनकृतपदस्यैव लक्ष्मीभवन्ति ॥ २५ ॥

**बिल्हणः—विक्रमांकदेवचरितम्**

Notes and Meanings.

The tenth Taranga opens with a description or rather a hymnus in praise of प्रवरपुर, the ancient capital of कश्मीर, which was situated on the confluence of the वितस्ता ( Jhelam ) and of the सिंधु. प्रवरपुर was, according to बिल्हण, not only the chief town in कश्मीर, but it surpassed in beauty all other cities, even Kubera's town, लंका and the town of the Gods ( 1. 13. 14 ). He praises it for its holiness, for the sanctity and learning of its Brahmanas ( 1.3-8 ), for its coolness in summer ( 2 ) and for the beauty of its groves, " which even those cannot forget who have reached the gardens of the celestials ( 15 ). " He extols its women for their beauty ( 11 ), for their learning which allows them to speak Sanskrit and Pràkrit like their native tongue ( 6 ) and for their cleverness in acting ( 18. 24 ).

Among its buildings he mentions the महारकमठ

( 11 ), the अग्रहाराः or Brahmanical settlements, found-ed by हलधर ( 16 ), the temple of क्षेमगौरिश्वर near the संगम ( 18 ), the संग्रामक्षेत्रमठ and the Agrahâras established by king अनंतदेव ( 19 ), the storehouse near the temple of शंकर, built by Ananta's queen ( 21 ), the ancient temple of S'iva ' that still shows in its roof the hole, through which, king प्रवर bodily ascended to heaven ( 23 ) ' and the lofty palaces of the kings of कश्मीर ( 25 ).

वितस्तता *f.* The name of a river; the modern Jhelam.

आधोरण *m.* The elephant-driver महामात्रः, हस्तिपकः।

अंकुश *m.* A goad.

वेच्छया स्वैरं धावन् यः कलियुगरूपो गजः अधर्ममदस्रावी दंती तस्य अंकुशत्वमर्थात्पापप्रक्षालनैकबुद्धित्वं प्रापयंति। वितस्तास्नानात्कलिकल्मषनाशो भवतीत्यर्थः।

सकालानि अखिलानि त्रीणीत्यर्थः भुवनानि तेषामाश्चर्यं विस्मयस्थानं यन्माधुर्यं मधुरता पक्षे शिशिरत्वं तस्य धुर्यं श्रेष्ठत्वं शैत्याधिक्यं च।

करैः किरणैः हस्तैश्च।

यत्र=प्रवरपुरे.

कमलिनीकामुक *m.* The moon. प्रफुल्लकमलपरिपूर्णे सरसि चन्द्रप्रतिबिंबवीचितरलतायाः नयनानंदवर्धनाच्च अस्य कामुकत्वं व्यज्यते।

रत्नानां मणीनां याः श्रेणयः पंक्तयः ताभ्यः समुद्भूता या किरणकलिका तद्वत्कोमलां।

अर्धेन्दुमौलि *m.* Siva; one that holds the crescent moon on the head.

हास्य &c. Laughing in Sanskrit is generally compared to the moon-light on account of the brilliance of milk-white teeth.

यस्मात्=प्रवरपुरात्.

उच्चैःस्फुरितमहसां=Shining with brilliant Brahmanical lustre of great renown. उच्चैर्ज्वलद्ब्रह्मतेजसां।

शापत्रस्त *adj.* fearful of a curse; afraid of a curse.

यत्र प्रवरपुरे उत्तुंगानां अभ्रंकषाणां मणिगृहभुवां मणिहर्म्यतलानां वातायनेषु गवाक्षेषु जगद्दुर्लभे भुवनेषु लब्धुमशक्ये। तादृशानां अनूनवस्तुकत्वात्। व्याख्या क्रियासंक्रांतौ कठिनपदानां विशदीकरणं

तया । अथवा व्याख्यापेद्न काव्यं ध्वन्यते। करणेन। या अभिख्या प्रितयशस्त्वं तस्यां प्रणयो यस्य तस्मिन् सूरिचक्रे कविसमुहे पण्डितसमाजे वा। स्थिते सति। प्रोद्यद्विपुलपुलकाः रोमाचकंटकितशरीरा देवाः सुराः पुष्पैः किं न वर्षंति कुसुमैस्तेषामुपरि वृष्टिं किं न कुर्वन्ति। यदि तत्र तस्मिन्विषये सुरगुरोर्बृहस्पतेः वैलक्ष्यदीक्षां वैमनस्यस्य पारतंत्र्य। अर्थात् शिथिलसमाधित्वं। नाशंकते। यदि वातायनस्थविदूरणप्रज्ञाकृष्टचेतोभिरमरगणैः कृतया पुष्पवृष्ट्या सूचितेन स्वप्रज्ञाभिभवेन जनितं यत्सुरगरोर्वैमनस्यं तस्मिन् यत् पारतंत्र्यं तन्नाशंकते तस्मान्न बिभ्यतीति यावत्। एवं च आकृष्टचेतसामापि पुष्पवृष्ट्यभावे स्वगुरुवैमनस्यानुत्पादनमेव हेतुरित्यर्थः।

यस्याः must be construed with शारदायाः।

आलयंत्या The object of this is प्रवरपुरम्।

उच्चैः शिरांसि धत्ते Holds up his head *i. e.* becomes very proud of her being so very near.

गौरिगुरुरपि Though the sire of a daughter having the fair complexion (पार्वती), yet he is very proud of शारदा on account of her being more white than himself and his daughter गौरी. अपि is often used to express emphasis, in the sense of even, also, very.

गंगासंबंधिन्या स्पर्धया ईर्षया। उद्गता धूर्गस्याः सा उद्धुरा औद्धुत्यात् स्वैरं गच्छंती या मधुमती नाम नदी तस्याः सैकतोत्संसेषु श्रेष्ठपुलिनेषु। उत्तंसः शिरोभूषणं इह तु श्रेष्ठवाची। या हंसी तद्वत् । धवलत्वात्साम्यमिदं। कदाचित्तत्र पुलिनेषु शारदायतनमापि भवेत्। सा शारदा सरस्वती स्वयं। यत्प्रवरपुरं विद्यानां रक्षायां। अधिकृतं दत्ताधिकारं अकरोत्।

सारस्वतकुलभू *f.* A district belonging to the सारस्वत country; a piece of land about the Sarasvati river (*i. e.* the north west part of the province of Delhi including part of the Panjab) सारस्वतब्राह्मणकुलानां निवासस्य।

तस्य must be construed with प्रवरपुरस्य।

अनेका नानाविधाः अद्भुताः विस्मयप्रदाः। ये गुणाः तेषां कथाभिः संकीर्तनैराकीर्णे। कर्णामृतं श्रुतितर्पणरूपं। यस्य तस्य।

जन्मभाषावत् Like a mother-tongue or native tongue.

आवासे आवासे इति प्रत्यावासं In every house.

विदलित *adj.* Churned, burst-asunder, rent, torn; blown, expanded, (as a flower).

प्रेमाकूत *n.* A feeling of love.

कुवलयदश् *f.* Women having eyes beautiful like a blue lotus.

यस्मिन्= प्रवरपुरे ।

शीकर *m.* Spray, thin or drizzling rain, drizzle; mist, a drop of rain or water.

द्राक्षाखंड *m. n.* A portion of land abounding with vines.

अमृत *adj.* milk-white, fair, brilliant; whitish.

दुर्लक्षत्वं &c. Made invisible to the eyes of men of कलियुग by the residence of the God Brahmá. शमित: अशेषतापो यस्या: सा।

व्रात *m.* A multitude, flock, assemblage, troop.

उच्छालित *adj.* moved, waved, waved above, shaken.

स्वैर *adj.* self-willed, wilful, wanton, unrestrained.

उत्संग *m.* A slope, side.

कुलसरित् *f.* A principal river (?).

यस्य Stands for प्रवरपुर.

तिलकित *adj.* Marked with the तिलक; ornamented, freckled, spotted.

संगिन् *adj.* Meeting, uniting with, going to or with.

अनुकार *m.* imitation, resemblance.

व्यसन *n.* An intent application or attachment to any object, inordinate addiction; diligence.

कुंकुम *n.* Saffron.

स्तनपरिसरात् = स्तनपरिणाहात् from the circumference of the bosom; from the orbs of the breast.

कांत *adj* Beautiful, lovely, charming.

निरवधि *adj.* without bounds or boundaries, unlimited.

अंके=जलप्रवाहरूपे उत्संगे In its current.

प्रतिकलं *adv.* Every moment.

कापि अनिर्वचनीया ।

कटाक्षच्छटा *f.* The straight glances; the charming glances.

भट्टारकमठ *m. n.* The name of the retired hut of an asce-

tic; *Cf.* नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः । विभेदं पूर्ववत्प्राप देवं निजबलं पुनः । प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु। भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत्—राजतरं. ।

सीमन्तिनीनां वधूनां ।

निशंकं *adv.* without any hesitation.

अपलाप *m.* censure, degradation.

The sidelong glances of lovely women are generally compared by Sanskrit poets to the luxuriant growth of beautiful blue-lotuses floating in a line on the surface of water in a lake. The eyes of women were even more beautiful than blue lotuses.

स्फटिकशिखरिन् *m.* The crystal mountain, the mountain कैलास.

अंक *m.* The middle part or ring of a mountain.

क्षोद *m.* Any pounded substance, dust.

स्फाटिक *adj.* made of crystal, crystalline.

वेद्मि I know to be; the poet's own reflection.

सातंकं *adj.* Always in fear, entertaining fear or danger.

प्रतिभटता *f.* Emulousness, emulation.

प्रद्युम्न *m.* The name of a mountain near प्रवरपुर.

छाया *f.* The beauty of colours or the beauty of meaning.

उरग *m.* A serpent; उरगा *f.* Name of a town.

उरगाधीशैः सर्पमुख्यैः रक्षायाः संरक्षणस्य आस्पदं स्थानं नीताः । कश्मीराः खलु सर्पमुख्यैः सततं रक्षणीयाः आसन् । उरगास्तान् रक्षंतीत्यर्थः ।

श्रीखंड *m.n.* The sandle-wood.

मुरलप्रेयसी *f.* A female of मुरल people or country.

स्तबकित *adj.* Full of blossoms.

लहरि *f.* A large wave, billow.

कलुष *n.* Dirt, uncleanness, sin, wrath.

हलधर *m.* The name of a king who reigned in Panjab.

अग्रहार *m.* Royal donation of land to Brahmanas; land thus given.

क्षत *adj.* Departed, vanished, gone.

अन्योन्यस्मिन् ग्रथिताः गुंफिताः या

लहर्यः तरंगाः ता एव दोलैता भुजलताः तासां ये बंधाः तेषु बंधुः।
शैलदुर्गीभू To become a mountain-fort i. e. to become a strong barrier, to barricade; शैलदुर्ग=a mountain-fort as opposed to भूमिदुर्ग= a landfort. *Cf.* तेनायासहृतानीतः कश्चित्स्वर्णैः सुरास्पदैः। शोभां मठाग्रहारैश्च वितस्तासिंधुसंगमः। भ्रातरश्च सुताश्चास्य लक्ष्मीपरिचयान्मदाः। द्विरदा इव न कापि दानप्रणयितां जहुः:—राजतरं०।
चर्या *f.* The preservance of religious rites or customs. चर्यायाः धर्माचरणस्य या मर्यादा सीमा तस्याः कृतयुगभूमेः &c.
दोला *f.* A swing.
दोलानां लीला तद्वत्तरलाश्चंचला गतयो येषां तेषु उत्संगेषु।
त्रिदशसुदृशां स्वर्वामानां अप्सरसामित्यर्थः।
प्रेंखित *adj.* Swung, set in motion, made to oscillate.
गुणनिका *f.* Dancing, the science or profession of dancing, acting &c. गुणनिकामण्डपः the dancing-hall.
दाम *adj.* Lovely, charming.
क्षेमगौरीश्वर *m.* The name of 'Siva's temple near the संगम. *Cf.* पालस्नेहांध्याविगमे मुद्राशयजुषोऽभवत्। देवी सूर्यमती भर्तुर्दर्पणस्येव बिंबिता। सुभटापरनामा सा गौरीश्वरविधायिनी। पुण्यं वितस्तापुलिने निर्ममे सुभटामठं। राजतरं०।
परिवृढ *adj.* Large, ample.
संग्रामक्षेत्रमठ *m.* The name of a holy place on the banks of the वितस्ता।
सीमंतित *adj.* Marked by a line.
अनंत *m.* The name of a king, who reigned in Kashmere. *Cf.* अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे। ब्राह्मणेभ्यो महापुण्यं विद्वद्भ्यः प्रत्यपादयत्। पत्युर्नाम्नाप्यग्रहारान् प्रददावमरेश्वरे। त्रिशूलबाणलिंगादि प्रतिष्ठाश्च विनिर्ममे। राजतरं.।
वितति *f.* Stretching out, spreading, extension, expansion, collection, quantity; a clump, cluster.
काष्ठील *adj.* Wooden, made of wood; a piece of wood.
अनंतक्षितिपगृहिणी *f.* The queen of the king named Anant her name was सुभटा.
गंजधामन् *n.* A store-house. See above पालस्नेहां &c.
जैत्र *adj.* Surpassing, superior, overcoming; victori-

ous, triumphant; (*n*) victory; triumph, superiority.

अंतरंगत्व *n.* The state or condition of having reference of the essential part of अंग, being essential to the part of अंग ; interior.

प्रवर *m.* Name of a king who reigned in Kashmere.

प्रवरगिरिजावल्लभ *m.* The name of a Siva लिंग. *Cf.* ततस्तं वृत्तसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः । जनैः स ददृशे गच्छन् कैलासतिलकां दिशं- विषदे घटयन् व्योम्नि द्वितीयतपनोदयं । राजतरं. ।

स्मेर *adj.* Expanded, blooming, opened; smiling laughing.

रेखा *f.* Likeness, representation, figure, impression, mark; painting, drawing, delineation, the outline.

## II
## TARANGA 11.

[ Then the minister गोमुख again said to नरवाहनदत्त, in order to solace him while pining for शक्तियशाः ; " prince, you have heard a tale of a wise person, now hear a tale about a fool "]

आसीत्कोऽपि पशुपालो वने धनवान् । बहवो धूर्ताः समाश्रित्य तस्य मित्राण्यभवन् । ते च तं जगदुः सखे कस्यचिदाढ्यस्य नगरवासिनः सुता त्वदर्थमस्माभिर्याचिता, सा च तत्पित्रा तुभ्यं दातुं प्रतिश्रुता। तदाकर्ण्य स तुष्टः तेभ्योऽर्थं ददौ । ततस्ते कतिपयैर्दिनैर्गतैस्तव विवाहः संपन्नः इत्यूचुः । तेन च सोऽतीव संतुष्टः तेभ्यो भूरीणि द्रविणानि प्रादात् । अथ कियत्सु दिनेषु गच्छत्सु ते अभ्यभाषंत सखे पुत्रस्ते जातः इति। स च तेन सर्वं तेभ्यः समर्प्य धनं भृशं ननन्द । अथापरेऽहनि पुत्रं प्रति

उत्सुकोऽहं सर्वं वित्तं दत्तवान् इति प्रारोदीत् । तेन च सर्वो जनस्तं धूर्तवञ्चितं प्रति जहसुः । तदिदानीं देव अलंकारलंबकं शृणु ।

कश्चिद् ग्राम्यः भूमिं खनन् रात्रौ राजकुलादपहृत्य चौरैस्तत्र रक्षितं महदलंकरणजातं प्राप । स च तद् गृहीत्वा सहर्षस्तेन स्वां भार्यामभूषयत् । मूर्ध्नि मेखलां जघने हारं करयोर्नूपुरौ कर्णयोश्च कंकणं बबन्ध । अथ हसद्भिर्जनैः ख्यापितं तद् राजा बुध्वा तस्मात्तत् सर्वमाभरणं जहार तञ्च पशुसमं मुमोच । तदेवं देव अलंकारलंबकः कथितः, सांप्रतं तूलिकं वच्मि श्रूयतां ।

पुरा कश्चिन्मूर्खः पुमान् तूलविक्रयाय आपणमगात् । तत्र तु कोऽपि जनः अशुद्धं तदिति न जग्राह । तावच्च स तत्राग्नौ निक्षिप्तशोधितं हेम ददर्श । तद् दृष्ट्वासौ जडः तत्तूलं शोधयितुं इच्छन्नग्नौ स्वर्णवच्चिक्षेप । ततश्च तस्मिन् दग्धे तत्रस्थो जनो जहास । श्रुतोऽयं तूलिकः सांप्रतं खर्जूरीच्छेदकान् शृणु ।

कदाचित्कैश्चिदाधिकारिभिः केचिद् ग्राम्या मूर्खाः राजकुलादिष्टखर्जूरानयनाय समाहूय न्ययुज्यन्त । ते च तत्र गत्वा सुखग्राह्यामेकां खर्जूरीं पतितां दृष्ट्वा स्वके ग्रामे अच्छिनन् अरोपयंश्च समाकृष्टफलानि सर्वाणि खर्जूराणि न चैषां परिश्रमः सिद्धिमवाप । ततश्चानीतखर्जूरास्ते कैरपि नादृताः । प्रत्युत राजा यथापराधं तानदण्डयत् । तदेवं खर्जूरवृक्षच्छेदकाः उक्ताः साम्प्रतं निध्यालोकनमुच्यते शृणु ।

पुरा केनापि नृपतिना कोपि निधिदृग्धा समाहूतः । स तु क-

चिदपि पलाय्य न गच्छेदिति राज्ञः कुमंत्रिणा तस्य निधिदर्शिनः नेत्रे समुत्पाटिते । इत्थं भूलक्षणानि द्रष्टुमक्षमं गतागतोः समं तं कुर्वन्नसौ मंत्री जडो जनैः हसितः । तदेवं निधानालोकनं श्रुतं, साम्प्रतं लवणाशी कथ्यते श्रूयताम् ।

अभवत् कश्चिद् गह्वरग्रामवासी जडः पुरुषः । स खलु नगरवासिना केनचिन्मित्रेण गृहं नीतः भोजितश्च लवणस्वादून्यन्नानि व्यञ्जनानि च । स च भुक्त्वा कथमेषा अन्नादेः स्वादुतेत्यपृच्छत् । स च सुहृल्लवणस्यैवं स्वादुतायाः प्राधान्यमित्यवोचत् । तदेव तर्हि भोक्तव्यमिति प्रोच्य स पिष्टस्य लवणस्य मुष्टिमादाय मुखे प्रक्षिप्याभक्षयत् । तस्य च लवणस्य चूर्णं तस्य दुर्बुद्धेरोष्ठौ श्मश्रूणि चालिपत् । तदवलोक्य हसतो जनस्य पुरतो लवणाशिनो मुखं धावल्यं ययौ । देव लवणाशी श्रुतः अधुना गोदोहकं शृणु ।

कश्चिदासीद् ग्राम्यः पुमान् । तस्यैका गौरभवत् । सा च धेनुस्तस्य पलशतं पयः प्रत्यहं प्रादात् । कदाचित् तत्प्रत्यासन्नः कश्चिन्महोत्सवः समवर्तत । एकवारमेव तस्याः प्राज्यं पयः उत्सवे गृहीष्यामीति विचिन्त्य स मूर्खः मासमात्रं तां न दुदोह । अथोत्सवे संप्रवृत्ते यावत्तां दोग्धि तावत्तस्याः अखिलं पयः नष्टमैक्षत । तदवलोक्य लोकाः अहसन् । हे देव मूर्खो गोदोहकः श्रुतः संप्रत्यपरौ श्रूयेताम् । सोमदेवः—कथासरित्सागरः ।

### टिट्टिभदंपत्योः ।

कस्मिंश्चित्समुद्रैकदेशे टिट्टिभदंपती वसतः । ततो गच्छति

काले ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त । आसन्नप्रसवा सती टिट्टिभमूचे । भोः कान्त मम प्रसवसमयो वर्तते तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं येन तत्राहमण्डकमोक्षणं करोमि । टिट्टिभ आह । भद्रे रम्योयं समुद्रप्रदेशः । तदत्रैव प्रसवः कार्यः । सा प्राह । अत्र पूर्णिमादिने समुद्रवेला चटति । सा मत्तगजेन्द्रानप्याकर्षति । तद्दूरमन्यत्र किंचित्स्थानमन्विष्यताम् । तच्छ्रुत्वा विहस्य टिट्टिभ आह । भद्रे न युक्तमुक्तं भवत्या । का मात्रा समुद्रस्य यो मम दूषयिष्याति प्रसूतिम् । तद्विश्रब्धात्रैव गर्भं मुञ्च । तच्छ्रुत्वा समुद्रश्चिन्तयामास । अहो गर्वः पक्षिकीटस्यास्य । तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोण्डापहारे कृते करिष्यति । इति चिन्तयित्वा स्थितः। अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रो वेलाव्याजेनाण्डान्यपजहार । अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे । भो मूर्ख कथितमासीन्मया ते यत् समुद्रवेलयाण्डानां विनाशो भविष्यति तद्दूरतरं व्रजावः परं मूढतयाहंकारमाश्रित्य मम वचनं न करोषि ।

विष्णुशर्मा—पंचतंत्रम् ।

## हंसौ कूर्मं प्रति कथयतः ।

"अस्त्युत्तरपथे गृध्रकूटनाम्नि पर्वते महान्पिप्पलवृक्षः । तत्रानेकबका निवसन्ति । तस्य वृक्षस्याधस्थाविवरे सर्पो बालापत्यानि खादति । अथ शोकार्तानां बकानां विलापं श्रुत्वा केन-

चिद्बकेनाभिहितम् । एवं न कुरुत । यूयं मत्स्यानुपादाय नकुलविवरादारभ्य सर्पविवरं यावत्पंक्तिक्रमेण विकिरत । ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्पो द्रष्टव्यः । स्वभावद्वेष्याद्व्यापादयितव्यश्च । तथानुष्ठिते तद्वृत्तम् । ततस्तत्र वृक्षे नकुलैर्बकशावकरावः श्रुतः। पश्चात्ते वृक्षमारुह्य बकशावकान्खादन्ति स्म"। अत आवां ब्रूवः उपायं चिन्तयन्नित्यादि । आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणम् । तत्सर्वथात्रैव स्थीयताम् । कूर्मो वदति । किमहमप्राज्ञः । नाहमुत्तरं दास्यामि । किमपि न वक्तव्यम् । तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च । कश्चिद्वदति । यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः । कश्चिद्वदति । अत्रैव दग्धः खादितव्योयम् । कश्चिद्वदति । गृहं नीत्वा भक्षणीयः । इति तद्वचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह । युष्माभिर्भस्म भक्षितव्यमिति वदन्नेव पतितस्तैर्व्यापादितश्च । अतोहं ब्रवीमि सुहृदां हितकामानामित्यादि ।

अथ प्रणिधिर्बकस्तत्रागत्योवाच । देव प्रागेव मया निगदितं दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति । तच्च युष्माभिर्न कृतम् । तदनवधानस्य फलमनुभूतमिति । दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः । राजा निश्वस्याह । प्रणधिरुवाच । इतो दुर्गदाहं विधाय यदागतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम् । अयं मेघवर्णः कर्पूरद्वीपराज्येभिषिच्यताम् । चक्रवाको

ब्रूते । ततस्ततः । तत्परः प्रणिधिरुवाच । ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम् । देव नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । महतामास्पदे नीचः कदापि न कर्तव्यः ।

पण्डितनारायणः—हितोपदेशः ।

## Notes and Meanings.

धूर्त *m.* A rogue.
महदलंकरणजात *n.* A splendid set of ornaments.
मेखला *f.* The girdle.
जघन *m. n.* Waist.
नूपुर *m.* The anklets.
कंकण *m.* The bracelets.
ख्यापित *adj.* Bruited it about.
तं च पशुसमं मुमोच &c. But let the villager go, because he was as stupid as an animal.
तूलिक *m.* A cotton-grower.
तूल *m. n.* Cotton.
आपण *m.* A market, a shop.
खर्जूरी *f.* A date-palm, a palm-tree.
निध्यालोकन *n.* The looking for treasure.
निधिदृश्वन् *m.* A treasure-finder.
लवणाशिन् *m.* A salt-eater.
व्यंजन *n.* Sauce, चटणीति दाक्षिणात्यभाषायां ।
अन्नादि *f.* Food, the preparation or dressing of food.
लवणस्यैवं स्वादुतायाः प्राधान्यं &c. That its relish was principally due to salt &c.
पलशत *n.* A hundred *palas* of milk.
प्राज्य *adj.* Plentyful.
टिट्टिभ *m.* A kind of bird.
चट् *conj.* 1. P. To break, break off; fall off.
विश्रब्ध *adj.* Confidently.
प्राणयात्रा *f.* Maintainance, subsistance.
प्रणिधि *m.* A spy, scout, emissary .

---

## TARANGA 12.

[ Damayantî's grief after she had been abandoned by Nala in a forest. ]

सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १ ॥
दारुणामटवीं प्राप्य भर्तृव्यसनपीडिता ।
विदर्भतनया राजन्विललाप सुदुःखिता ॥ २ ॥
व्यूढोरस्क महाबाहो नैषधानां जनाधिप ।
क्व नु राजन्गतोसीह त्यक्त्वा मां विजने वने ॥ ३ ॥
अश्वमेधादिभिर्वीर क्रतुभिर्भूरिदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ ४ ॥
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते ।
स्मर्तुमर्हसि कल्याण वचनं पार्थिवर्षभ ॥ ५ ॥
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्समक्षं यदुक्तं च तदवेक्षितुमर्हसि ॥ ६ ॥
हा वीर ननु नामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ ७ ॥
भक्षयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट्क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ ८ ॥
न मे त्वदन्या काचिद्धि प्रियास्तीत्यब्रवीः सदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ ९ ॥
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।

ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे ॥ १० ॥
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
नमानयासि मामार्य रुदतीमरिकर्षण ॥ ११ ॥
महाराज महारण्ये अहमेकाकिनी सती ।
दमयन्त्यभिभाषे त्वां किं मां न प्रतिभाषसे ॥ १२ ॥
कुलशीलोपसंपन्न चारुसर्वाङ्गदर्शन ।
नाद्य त्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तम ॥ १३ ॥
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ।
शयानमुपविष्टं वा स्थितं वा निषधाधिप ॥ १४ ॥
कं नु पृच्छामि दुःखार्त्ता त्वदर्थे शोककर्षिता ।
कच्चिदृष्टस्त्वयारण्ये संगत्येह नलो नृपः ॥ १५ ॥
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ १६ ॥
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोभिमुखोभ्येति व्रजाम्येनमशङ्किता ॥ १७ ॥
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ १८ ॥
पतिमन्वेषतीमेकां कृपणां शोककर्षिताम् ।
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ १९ ॥
अथ वा त्वं वनपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ २० ॥
श्रुत्वारण्ये विलपितं ममैष मृगराट् स्वयम् ।

यात्येतां मृष्टसलिलामापगां सागरंगमाम् ॥ २१ ॥
इमं शिलोच्चयं पुण्यं शृंगैर्बहुभिरुच्छ्रितैः ।
विराजद्भिर्दिविस्पृग्भिर्नैकवर्णैर्मनोहरैः ॥ २२ ॥
अस्यारण्यस्य महतः केतुभूतमिवोत्थितम् ।
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ॥ २३ ॥
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेस्तु महीधर ॥ २४ ॥
प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम् ।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥ २५ ॥
विदर्भराजाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ २६ ॥
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ २७ ॥
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्वीर्यसंपन्नः पृथुश्रीर्धर्मविच्छुचिः ॥ २८ ॥
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ २९ ॥
निषधेषु महाराजः श्वशुरो मे नरोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ३० ॥
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ।
नलो नामारिहा श्यामः पुण्यश्लोक इति श्रुतः ॥ ३१ ॥
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोग्निमान् ।

यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ॥ ३२ ॥
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ।
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम् ॥ ३३ ॥
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोचलश्रेष्ठ वनेस्मिन्दारुणे नलः ॥ ३४ ॥
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ३५ ॥
किं मां विलपन्तीमेकां पर्वतश्रेष्ठ विह्वलाम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिवदुःखिताम् ॥ ३६ ॥
कदा सुस्निग्धगम्भीरां जीमूतस्वनसंनिभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ३७ ॥
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ३८ ॥
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननदर्शनम् ॥ ३९ ॥
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ४० ॥
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।
वर्चस्विनी सुप्रतिष्ठा श्वसितायतलोचना ॥ ४१ ॥
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ॥ ४२ ॥
साभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।

स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ॥ ४३ ॥
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहै ॥ ४४ ॥
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु कुशलं स्वधर्मचरणेषु च ॥ ४५ ॥
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनि ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ४६ ॥
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ४७ ॥
अस्यारण्यस्य देवी त्वमुताहोस्य महीभृतः ।
अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ४८ ॥
साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा नैव नद्याश्च देवता ॥ ४९ ॥
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ५० ॥
विदर्भेषु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ५१ ॥
निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशांपतिः ॥ ५२ ॥
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ५३ ॥
स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्माभिः ।

आहूय देवने जिह्मैर्जितो राज्यं वसूनि च ॥ ५४ ॥
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्याता भर्तुर्दर्शनलालसाम् ॥ ५५ ॥
सा वनानि गिरींश्चैव विचरामीह दुःखिता ।
अन्वेषमाणा भर्तारं नलं रणविशारदम् ॥ ५६ ॥
कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ५७ ॥
यत्कृतेहमिदं दुर्गं प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ५८ ॥
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् ॥५९॥
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ६० ॥
तथा विलपन्तीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यदर्शिनः ॥ ६१ ॥
उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्यामस्तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ६२ ॥
निषधानामधिपतिं नलं रिपुनिपातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ६३ ॥
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरं भूयः प्रशासतमरिंदमम् ॥ ६४ ॥

द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ६१ ॥
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
तापसान्तर्हिताः सर्वे साग्निहोत्राश्रमास्तदा ॥ ६६ ॥

व्यासः–महाभारतम् ।

Notes and Meanings.

मृगव्याध *m.* A hunter of wild animals, huntsman.

स्था *conj.* 1.P. with प्र, to start; to travel; *caus.* To send out. In epic poetry also *Atm.* in all significations.

झिल्लिका *f.* A cricket.

द्वीपिन् *m.* A panther.

रुरु *m.* A spotted deer.

लोध्र *m.* A kind of tree.

आमलक *m. n.* A plant and its fruit. आवळीचें झाड इति महाराष्ट्रभाषायां.

प्लक्ष *m.* The waved-leafed figtree.

पद्मक *n.* A kind of plant.

यूथशः *adv.* In herds.

ददृशे=Rarely *Atm*

वनपन्नग *m.* Boaconstrictor; a large and powerful serpent.

पर *adj.* Excellent.

व्यूढ *adj.* Large.

व्यात्तास्यः=व्यात्तं आस्यं यस्य With opened jaws.

अरण्यराज् *m.* A lion.

ऋत *adj.* True.

दंष्ट्रा *f.* A tusk, a fang.

कृपण *adj.* Poor, pitiable, help-less.

आश्वासय *caus.* To console, to comfort.

खाद् *conj* 1. P., 10. P. A. To eat.

विलपित *n.* Lament.

मृष्ट *adj.* Clear, pure, limpid, translucent.

उच्छ्रित *adj.* Elevated, high.

दक्षिणावत् *adj.* Accompanied by large donations.

अंचितेक्षण *adj.* Of beautiful eyes.

ब्रह्मण्य *adj.* Pious.

जीमूत *m.* A cloud.

दम *m.* A self-command, restraint of passions.

शौच *n.* Purity, purification
निकृतिप्रज्ञ *adj.* Of wicked mind or thought.
अकृतात्मन् *adj.* Having a bad disposition.
देवन *n.* Gambling ; play.
जिह्म *adj.* Dishonest.
लालसा *f.* A longing, an ardent desire.
दुर्ग *adj.* Inaccessible.
श्रेयसा युज् To kill.
उदर्क *m.* Futurity ; reward.

---

## TARANGA 13.

[ Tales From Kâlidâsa The Vikramorvas'îyam. ]

अस्त्यत्र धरापीठे प्रतिष्ठानं नाम सुसमृद्धं नगरम् । तत्र पुरूरवा नाम सोमवंशावतंसः पार्थिवो मेदिनीमशात् । तस्य काशीराजस्य पुत्र्यौशीनरी नाम महिष्यासीत् । अथैकदा स सूर्योपस्थानात्प्रतिनिवृत्तः किमप्याक्रन्दितं शुश्राव । परित्रायतां परित्रायतां यः सुरपक्षपाती, यस्य वाम्बरतले गतिरस्तीति । मधुरालापनिसर्गपण्डितानां स्त्रीणां आर्तरवमाकर्ण्य इतस्ततो विलोक्य, आक्रन्दितादिशं प्रति प्रेरितलोचनः कुत्र भवत्यः । कुतो वा भवत्यः परित्रातव्याः इत्यप्सरसां गणं सोऽनुयुयुजे । तदा रंभा उवाच । महाराज, समाधिभीरूकस्य महेन्द्रस्य समुच्छ्वसितं, रूपगर्वितायाः श्रियोऽपि ह्रीपदमादधाना, स्वर्गालंकारभूता नः प्रियसखी कुबेरभवनात्प्रत्यागच्छन्ती समापत्तिदृष्टेन केशिना दानवेन चित्रलेखा द्वितीया बन्दिग्राहं गृहीता । अतोऽसुरावलेपो नः भयहेतुरिति । तदा ऐशानीं दिशं स सुराद्विट् प्रचलित इत्युदन्तमुपलभ्य तत्र च गत्वा तस्माद्दानवात्तां

चित्रलेखाद्वितीयां मोचयित्वा संकेतस्थलं हेमकूटशिखरं प्रत्या-
ययौ । ततो रथस्थोर्वशी कतिचित्कालापगमेन संज्ञां प्रत्यपद्यत ।
ततः हेमकूटमवतार्यमाणस्य रथस्य चक्रोद्घातेन राज्ञ उर्वश्या-
श्चांगस्पर्शनं जातम् । अनेनान्योन्यस्य चेतसि मनसिजेन पद-
मकारि । रथे स्थापिते, चित्रलेखावलंबितहस्तोर्वशी रथा-
दवतीर्णा सखीगणं क्रमेण परिरब्धवती । अत्रान्तरे गन्ध-
र्वराजश्चित्ररथोऽपि तत्र समापेदे । परस्परहस्तस्पर्शा-
न्तरं चित्ररथः पुरूरवसमुवाच । वयस्य, केशिना हृतामुर्व-
शीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना
समादिष्टा । ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं
श्रुत्वा त्वामिहस्थमुपागताः । स भवानिमां पुरस्कृत्य सहास्मा-
भिर्भगवन्तं मघवन्तं द्रष्टुमर्हति । महत्खलु तत्रभवतो मघोनः
प्रियमनुष्ठितं भवता इति । राजाह सखे, नायमवसरो मम श-
तक्रतुं द्रष्टुम् । त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय इति गन्ध-
र्वराजं चित्ररथं समादिश्य पुरूरवाः स्वराजधानीं प्रति निवर्त्त-
ते । ततःप्रभृति तद्दर्शनात्पर्युत्सुको राजा कथं कथमपि
कालं निनाय । तदनु देव्यौशीनरी राज्ञः शून्यहृदयस्य कारणं
जिज्ञासमाना स्वचेटीं निपुणिकां राजरहस्यं भेत्तुं विरलजनसं-
पातस्थितमार्यमाणवकं प्रति प्रस्थापयामास । सापि निपुणिका
तद्राजरहस्यं भित्वा यत्कृते भर्तोत्कण्ठितस्तस्या नामोर्वशीति
ज्ञात्वा तं ब्रह्मबन्धुमपि अति संघाय कृतार्था देवीमाजगाम ।
माणवकोऽपि कार्यासनादुत्थितस्य राज्ञः पार्श्वपरिवर्ती बभूव ।

ततः क्वेदानीमात्मानं विनोदयामीति । सव्यथो राजा प्रमदवनं गतवान् । किं तु तत्रापि सुखं न लेभे । ततस्तद्विनोदनार्थं आर्यमाणवकस्तदुद्यानस्याभिरामणीयकत्वं राज्ञे दर्शयामास । तत्रातिमुक्तलतामण्डपे स्थितो राजाह वयस्य, तद्रूपावलोकदुर्ललितं मे चक्षुर्न कुत्रापि धृतिं बध्नाति । तदुपायश्चिन्त्यतां यथा सफलप्रार्थनो भवेयम् । अथ आर्यमाणवको यावदुपायं चिन्तयति तावत् आकाशयानेनोर्वशी चित्रलेखा च तत्रैवोद्याने प्रविश्य तिरस्करिणीप्रतिच्छन्ने सत्यौ पार्श्वपरिवर्तिना वयस्येन सह किमपि मन्त्रयमाणस्य राज्ञः पार्श्ववर्तिन्यौ संजाते। उर्वशी पार्थिवं चिन्तया तूष्णींभूतं दृष्ट्वा व्यचिन्तयत् । का नु खल्वेषानेन प्रार्थ्यमानात्मानं विकत्थत इति । ततः माणवको राजानमाह वयस्य, स्वप्नसमागमकारिण्या निद्रया अथवा तत्रभवत्या उर्वश्याः प्रतिकृतिदर्शनेन च आत्मानं विनोदयितुमर्हसि । एतत् श्रुत्वा राजा प्राह । उभयमप्यनुपपन्नम् । वयस्य, सा उर्वशी मम मानसीं नितान्तकठिनां रुजं न ज्ञातवती । अतः तस्यां मम समागममनोरथानलब्धफलनीरसान्विधाय पञ्चबाणः सुखी भवतु । एतदाकर्ण्य मध्येव बद्धभावोयामिति मत्वा प्रभावनिर्मिते भूर्जपत्रे अक्षरविन्यासं कृत्वा तत्र क्षिप्तवती । अकस्मात्संमुखे पतितं भूर्जपत्रं अवलोक्य भुजङ्गनिर्मोकमुत्प्रेक्षमाणो माणवकश्चुक्रोश । पार्थिवस्तु विभाव्य भूर्जपत्रगतान्यक्षराणि वीक्ष्य गृहीत्वानुवाचयामास—स्वामिन्, यथाहं त्वया संभाविता न तथाहं । ननु ममापि लुलितपारिजातशयनीये नन्दनवनवाता

अपि शरीरेऽत्युष्णा भवन्ति। अनेन जाताशो राजा पुरूरवाः प्रोवाच। वयस्य, अङ्गुलीस्वेदेन दूष्येरन्नक्षराणि। तद्धार्यतामयं प्रियाया हस्तः इत्युक्त्वा तस्मै भूर्जपत्रं अर्पयामास। ततस्तिरस्करिणीमपनीय चित्रलेखा राजानमुपसृत्य उदीरयामास। महाराज, उर्वशी शिरसा प्रणम्य विज्ञापयति। मम सुरारिसंभवे दुर्जाते महाराज एव शरणमासीत्। साहं तव दर्शनसमुत्थेन मदनेन बलवद्बाध्यमाना भूयोऽपि महाराजेनानुकम्पनीयेति। निशम्यैतद्राजा प्रोवाच। भद्रमुखि, स्मरविक्लवां तामेव पुरस्कृत्य कथयसि न पुनर्बलवदशरणं मां पुरूरवसं। मत्कृते तादृशमवस्थान्तरगतं राजानं समर्थ्य ससंभ्रमं पटाक्षेपेणोर्वशी राज्ञः पुरत आविर्भूय जयशब्दमुदीरयामास। तामागतां दृष्ट्वा ससंभ्रममुत्थाय तां हस्ते गृहीत्वा स्वासने समुपावेशयद्राजा। अत्रान्तरे चित्रलेखे, अष्टरसाश्रयं ललिताभिनयं प्रयोक्तुं त्वरयोर्वशीमिति कश्चिद्देवदूतो गिरं ससर्ज। श्रुत्वैतद्विषण्णवदनोर्वशी राजानं विज्ञाप्य कथं कथमपि वियोगदुःखं वहन्ती ससखी निष्क्रान्ता। गतायां तस्यां तद्भूर्जपत्रं प्रमादतो माणवकहस्तात्प्रभ्रष्टमासीत्। अत्रांतरे सपरिवारा देवी विश्रब्धं मंत्रयमाणं सुहृद्द्वितीयं राजानमन्विष्यन्ती तद्भूर्जपत्रमासादितवती। ततः भूर्जपत्रगतलेखमनुवाच्य तदभिप्रायं विदित्वा कदाचिदार्यपुत्रः एतदर्थमनुतप्येतेति मन्यमाना देवी आर्यपुत्र, अलमलमावेगेन। एतत्तद्भूर्जपत्रमिति राज्ञो हस्ते विसृष्टवती। राजापि कुपितां तामनुनेतुं दाक्षिण्यवशात्प्रवृतः सन् तस्याः पादयोः पपात। पादपति-

तमपि तमपहाय प्रसादमकृत्वा सपरिवारा निश्चक्राम। ततः खिन्नः पार्थिवः मध्यंदिनमारूढः सवितेति स्नानभोजनं सेवितुं गृहाभ्यन्तरं प्रविवेश।

अथ कतिचिद्दिवसापगमे सनियमा देवी मणिहर्म्यपृष्ठे आर्यपुत्रेण समं अखण्डकलं शशिनं प्रत्यक्षीकर्तुमिच्छामीति कंचुकिमुखेन राजानं व्यजिज्ञपत्। ततः तदनुरोधात् सवस्यो राजा संकेतस्थानं आगतवान्। आगत्य च निजामस्वस्थामवस्थां प्रियसुहृदे आचष्टुमारब्धवान्। अत्रान्तरे अभिसारिकावेषा ससखी ऊर्वशी आकाशयानेनागत्य राज्ञो निभृतालापमंतरिता शुश्राव। ततो राज्ञोऽसंनिधानं असहमानोर्वशी यावत्संमुखमापतति तावत्सपरीवारा देव्यपि तमेवोद्देशमाजगाम। तां दृष्ट्वोर्वशीचित्रलेखे अन्तर्हिते बभूवतुः। ततो देवी प्रथमं चंद्रपादानर्चित्वा गन्धपुष्पादीभिः, माणवकाय स्वास्तिवायनमौपहारिकमोदकसाहितं लम्भयित्वा, राज्ञः सपर्यां विधाय, प्राञ्जलिः प्रणिपत्योवाच। एषाहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्यार्यपुत्रमनुप्रसादयामि। अद्य प्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते, यार्यपुत्रस्य समागमप्रणयिनी, तया मया प्रीतिबन्धेन वर्तितव्यमिति। इत्युक्त्वा संपादितप्रियानुप्रसादनव्रता सपरिवारा देवी निष्क्रान्ता। गतायां देव्यां सा मे प्रिया सकृदपि दृष्टिसरणिमापतिष्यतीति विभावयन् राजा तत्समागमाभिलाषी तस्थौ। ततः सहसोर्वशी राज्ञः पृष्ठतो भूत्वा तन्नयने समवृणोत्। राज्ञः प्रत्यभिज्ञानानन्तरं हस्तावप-

नीय पुरो भूत्वा जयशब्दमुदीरयामास । राजा तामेकासन उपावेशयत् । तत उर्वश्याः सखी चित्रलेखा स्वर्गाय गन्तुकामा सखीमन्तरेण राजनमाह—"महाभाग, यथेयं मे प्रियसखी स्वर्गाय नोत्कण्ठयति तथा वयस्येन कर्तव्यम्"। इति विज्ञाप्योर्वशीं राज्ञो हस्ते विमुच्य सखीमामन्त्र्य स्वर्गं प्रतस्थे । गतायां चित्रलेखायां सवयस्यो राजा प्रदोषरमणीयांश्चन्द्रपादान्मुहूर्तं निषेव्य प्रियया सह वासगृहं विवेश ।

अथ दिनेषु गच्छत्सु भूतलमेव सुचिरं स्थितोर्वशी तं रतिसहायं राजर्षिममात्येषु निवेशितराज्यधुरं आदाय गन्धमादनवने विहर्तुकामा मन्दाकिन्याः पुलिनेषु चागत्य सिकतापर्वतकेलीभिः खेलंती विद्याधरदारिकोदयवती नाम तेन राजर्षिणा निध्यातेति तस्मै अकुपत् । ततश्च भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसंमूढहृदया स्त्रीजनपरिहरणीयं कुमारवनं विगाह्य लताभावेन परिणता । पूरूरवा अपि तस्मिन्नेव कानने गुरुविरहसंमूढचेताः प्रियाप्रवृत्तिं लब्धुमनाः सन् । अपि दृष्टा मे वनिता । क्व गता मे प्रियेत्येतत्सदृशानन्यान्प्रश्नांश्च नवजलधरं नीलकण्ठं परभृतां जलविहंगमान्हंसांश्चक्रवाकान्मधुकरं नागराजं सारंगं चैवैकशः क्रमेण प्रष्टुमारेभे। न केवलं सचेतनानचेतनानापि तथैवानुयुयुजे । ततः कालक्रमेण कश्चिन्मृगचारी तपस्वी तदवस्थं तमवलोक्य जातदयः संगमनीयनामानं मणिं तस्मै समर्पयामास । ततस्तमादाय यावत्परिक्राम्यति तावत्कामपि अपगतपुराणपत्रकुसुमसंचयां लतां दृष्ट्वा समुपजातप्रीतिः सद्यस्तस्याः प्रियानुकारिण्याः परिष्व-

कृपणयी भूत्वा यावल्लतां परिष्वज्य निमीलिताक्षस्तिष्ठति ताव त्तस्मिन्नेव स्थल उर्वशी प्रादुर्बभूव । ततः उभावपि परस्पर-संदर्शनजनितप्रमोदस्य परां कोटिमधिरूढौ । कथय कथ-मियन्तं कालमवस्थिता मया विना "कल्याणीति तां पप्रच्छ राजा । तत उर्वशी तं प्रत्युवाच । महाराज, भवता विनेयन्तं कालं कुत्रावस्थिताहं शृणु । भगवता कुमारेण शाश्वतं कुमार-व्रतं गृहीत्वाकलुषो नाम गन्धमादनकच्छोऽध्यासितः । कृतश्चै-ष विधिः, यैतं प्रदेशं स्त्री प्रवेक्ष्यति सा लताभावेन परिणंस्य-ति । गौरीचरणसंभवं मणिं विना ततो न मोक्ष्यत इति । साहं गुरुशापसंमूढहृदया देवतासमयं विस्मृत्यागृहीतानुनया कुमारवनं प्रविष्टा । प्रवेशानन्तरमेव वासन्तीलता संवृत्तेति । ततो राजा प्राह । प्रिये सर्वमिदमुपपन्नं किंतु मम विरहानलस्त्वामियतं कालं कथं नाधक्ष्यत् । इत्युक्त्वा तस्यै मणिं दर्शयामास । उर्वशी तं दृष्ट्वा प्राह । अहो संगमनीयः । अतः खलु महाराजेनालिङ्गित-मात्रैव प्रकृतिस्थास्मि संवृत्तेत्युक्त्वा मणिमादाय मूर्धन्यवहत् । पुरूरवसं च पुनराह । महान्खलु कालस्तव प्रतिष्ठानान्निर्गतस्य । असूयन्ति मह्यं प्रकृतयः । तदेहि निवर्तावहे इत्युभौ प्रतिष्ठानं प्रति प्रतिनिवृत्तौ ।

अथ बहुतिथे काले गते परिजनमध्यगतायाः कस्याश्चिद्धस्ताद्दु-कूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य राज्ञो नीयमानः संगम-नीयमणिरामिषशङ्किना गृध्रेणाक्षिप्यानायि । तदत्याहितं दृष्ट्वा राजापि परिगतार्थः शरासनं गृहीत्वा तं हंतुमुद्यतो भवति ताव-

त्सोऽपि क्रव्यादो बाणपथमतीतः । ततो राजा विचीयतां स विहगदस्युरिति कंचुकिनमाज्ञापयामास । अत्रान्तरे केनापि क्षत्रकुलावतंसेन राजकुमारेण स पतत्री समौलिरत्नो व्यापाद्य भूमौ पातितः। तमन्विष्य नागरिकः सबाणं मणिमादाय तस्मान्मह्यमर्पितवानिति कंचुकी राज्ञे निवेदयामास । तदा राजा प्राह । लातव्य, अपि ज्ञायते कस्यायं बाणः इति । कञ्चुकी देव, नामाङ्कितो दृश्यते । न तु मे वर्णविचारक्षमा दृष्टि इत्युक्तवान् । राजाह तेन ह्युपनय शरम् । कञ्चुकिनोपनीतं तं गृहीत्वा नामाक्षराण्यन्ववाचयत्

"उर्वशीसंभवस्याहमैलसूनोर्धनुर्भृतः ।
कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ॥"

समुपजातविस्मयस्य राज्ञः मनसि एवमभूत् । ततः समीपवर्तिनं वयस्यमाह । सखे नैमिषेयसत्रादवियुक्तोऽहमुर्वश्या । न च मया गर्भव्यक्तिरालक्षिता । कुत एव प्रसूतिः यदिपुनरापन्नसत्वा पुत्रसंवरणे किमिव कारणं तत्रभवत्याः इति पर्याकुलो यावत्तिष्ठति तावत्कञ्चुक्यागत्य व्यजिज्ञपत्—"देव, च्यवनाश्रमात्कुमारं गृहीत्वा संप्राप्ता तापसी देवं द्रष्टुमिच्छति" इत्युक्त्वा सकुमारां तापसीं राज्ञः पुरस्तादानीतवान् । ततो राजा तापसीमागमनकारणं पप्रच्छ । सा प्राह । महाराज, एष दीर्घायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत्क्षत्रियकुमारस्य जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

अद्य पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितम् । गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य । तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहं समादिष्टा । निर्यातय हस्तन्यासमिति । अतोहमुर्वशीदर्शनकांक्षिणी । तत उर्वशी तत्रागत्य सत्यवतीसूचितं पुत्रं निर्वर्ण्य तं परिष्वज्य प्राह । वत्स, पितरमाराधयिता भवेति । उपचारानन्तरं राज्ञा दत्तेऽर्धासन उपविष्टोर्वशी । सर्वेऽपि यथोचितमुपाविशन् । आसनपरिग्रहानन्तरं तापस्युर्वशीमुद्दिश्याह–"एष गृहीतविद्य आयुः सांप्रतं कवचधरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । इत्युक्त्वा तापसी च्यवनाश्रमाभिमुखं साधयामास । गतायां तस्यां अश्रुगर्भविलोचनां तामुर्वशीं दृष्ट्वा राजापि तदश्रुकारणं पप्रच्छ । तत उर्वशी बाष्पं निगृह्याह–शृणोतु महाराजः । प्रथमं पुनः पुत्रदर्शनेन विस्मृतास्मि । इदानीं महेन्द्रसंकीर्तनेन समयो मम हृदयमायासयति । अहं पुरा महाराजगृहीतहृदया महेन्द्रेणाज्ञापिता यदैष मम प्रियसखो राजर्षिस्त्वयि समुत्पन्नस्य वंशकरस्य मुखं प्रेक्षिष्यते, तदा त्वया भूयोऽपि मम समीपमागन्तव्यमिति । ततो मया महाराजवियोगभीरुतया जातमात्र एव विद्यागमनिमित्तं भगवतश्च्यवनस्याश्रमपद आर्यायाः सत्यवत्या हस्तेऽप्रकाशं निक्षिप्तः । अद्य पितुराराधनसमर्थः संवृत्त इति कलयन्त्या निर्यातितो मे दीर्घायुः । तदेतावान्मे महाराजेन संवासः । वज्रपातसदृशं तत्तस्या वचः श्रुत्वा सर्वे विषादमास्थिताः । रा-

जापि सनिश्वासमाह–अहो सुखप्रत्यर्थिता दैवस्येति । सूनौ न्यस्तराज्यो वनान्याश्रयितुं मनश्चक्रे । पार्थिवः ततः कञ्चुकिनमाज्ञापयत् । मद्वचनादमात्यपरिषदं ब्रूहि संभ्रियतामायुषो राज्याभिषेकः इति । अत्रांतरे देवर्षिर्नारदोम्बरतलान्महीमवतीर्य राजानं एवं वक्तुमारेभे । राजन्, प्रभावदर्शी मघवा वनगमनाय कृतबुद्धिं भवन्तमनुशास्ति । त्रिकालदर्शिभिर्मुनिभिरादिष्टः सुरासुरसंगरो भावी । भवांश्च सांयुगीनः सहायो नः । तेन त्वया न शस्त्रं संन्यस्तव्यम् । इयं चोर्वशी यावदायुस्तव सहधर्मचारिणी भवतु इति । ततः स्वयं महेन्द्रेण संभृतं कुमारस्यायुषो यौवराज्याभिषेकमप्सरोभिरानाय्य भगवान्नारदो भद्रपीठे तमुपवेश्य कुमारस्य शिरसि स्वयं कलशमावर्जयामास । अप्सरोभिश्च शेषं विधिं निर्वर्तयामास । एवं यावदायुरुर्वशीलाभेन राजा पुरुरवाः, पुत्रस्य यौवराज्यलाभेन विक्रमोर्वशी, शस्त्रासंन्यासेन बिडौजाः, यौवराज्यलाभेनायुः, सौराज्यलाभेन प्रकृतयः, सर्वेऽपि निर्वृतिमन्तः आनंदस्य परां कोटिमध्यगच्छन् ।

## Notes and Meanings.

प्रतिष्ठान *n*. The modern पैठण.

सूर्योपस्थान *n*. Attendance on, service of the sun.

आक्रंदित *n*. A cry, lamentation, roar.

समापत्तिदृष्टेन Who was seen (by us) all of a sudden; whom we did not see before he came and took Urvasi prisoner. *Cf*, मा तावदत्रभवत्यत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समापत्तिदृष्टेन देव्याः परिजनेन संकथापि यद्यपराधी स्यात्तदत्र त्वमेव प्रमाणं । मालवि. ।

असुरावलेप *m.* The insult given by the demon.
संकेतस्थल *n.* A place of appointment.
संज्ञां प्रतिपद् To regain consciousness.
चक्रोद्घात *m.* Jolting of the wheels.
परस्परहस्तस्पर्शानंतरं After shaking hands with each other.
अंतरा *ind.* On the way, half way.
जयोदाहरणं श्रुत्वा Having heard the proclamation of thy victory.
अवसर *m.* Time.
राजरहस्य *n.* The secret of the king.
ब्रह्मबंधु. *m.* A wily Brahmana, the wretch of a Brahmana.
अतिसंधा To deceive, to impose upon.
दुर्ललित *adj.* Perverted.
धृति *f.* Pleasure, satisfaction.
आकाशयान *n.* The heavenly car.
तिरस्कारिणीप्रतिच्छन्ने Something that rendered them invisible.
कानु खलु &c. Who prides herself on her being sought by him &c.
भूर्जपत्र *n* A birch leaf.
लुलित *adj.* Trodden, rubbed.
दुर्जात *n.* Calamity.
सपर्या *f.* A worship.
कुमारव्रत *m. n.* A vow of celibacy. ब्रह्मचर्य ।
कच्छ *m.* A region.
विधि *m.* A rule, order, injunction.
समय *m.* A rule.
दुकूलोत्तरच्छद *m.* The overcover of a rich garment
तालवृंताधार *m.* A basket made of Tala leaf.
अत्याहित *n.* A daring act.
वर्णविचारक्षमा *f.* Able to decipher, read.
ऐलसूनु *m.* The son of ऐल, Purûravas, so called because he was the son of इला.
आयुस् *m* Name of Urvas'i's son.
न्यासीकृत *adj.* Deposited, gave in my charge.
अभिविनीत *adj.* Instructed, trained.
निर्यातय *caus.* Pay back, return.
कवचधर *adj.* Able to wear armour.
प्रत्यर्थिता *f.* Hostility.
सांयुगीन *m.* A soldier skilled in war, a great warrior.

सहधर्मचारिणी *f.* A wife, partner in the practice of religious duties.

भद्रपीठ *n.* A Golden footstool.

सौराज्य *n.* Good Government.

---

## TARANGA 14.

[ S'iva Disguised as an Ascetic. ]

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥७॥
तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ९ ॥
अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥
अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥११॥
अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते॥१२॥
यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥१३॥
अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि ।

त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥१४
प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते १५
अतोत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥१६॥
कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥१७॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि ॥१८॥
अलभ्य शोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः परं प्रसारयेत्पन्नगरत्नसूचये ॥१९॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥२०॥
दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् २१
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥
अहो स्थिरः कोपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते।
उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः॥२३॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥
अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।

करोति लक्ष्यं चिरमस्य चक्षुषो न वक्रमात्मीयमरालपक्ष्मणः॥२५॥
कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्द्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् २६
इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ २७ ॥
सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥२८॥
इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति २९
यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥३०॥
न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥३१॥
अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥३२॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥ ३३ ॥
यथा श्रुतं वेदविदां वर त्वया जनोयमुच्चैः पदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ ३४ ॥
अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥३५॥

अवस्तुनिर्बन्धपरे कथं नु ते करोयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम्॥३६॥
त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥३७॥
चतुष्कपुष्पप्रकारावकीर्णयोः परोपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥३८॥
अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षःसुलभं तवापि यत् ।
स्तनद्वयेस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति॥३९॥
इयं च तेन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति॥
द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥
निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया॥
इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥४६॥
उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्॥
विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः॥

अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः॥
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वास्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥४८॥
तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।
तथा हि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम्॥
असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥५०॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ९१॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥९२॥
निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोपभाषते शृणोति तस्मादपि यः स पापभाक् ॥
इतो गमिष्याम्यथवेतिवादिनी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ५५ ॥

**कालिदासः—कुमारसंभवम् ।**

## Notes and Meanings.

अजिन *n*. a hide of a black antelope.

आषाढ *m*. A staff made of Palâs'a wood.

प्रगल्भवाच् *adj*. Bold in speech.

शरीरबद्ध *adj*. Endued with a body.

प्रथमाश्रमो यथा=ब्रह्मचर्याश्रम इव ।

बहुमान: पूर्वो यस्यास्तया ।

स्थिरचेतसां=Of the steady-minded, of the stable-minded स्थिरचित्तानां ।

वपुर्विशेषेषु—Towards distinguished persons, great men. व्यक्तिविशेषेषु । साधवो न साम्या भिनिवेशिन इति भाव: ।

साम्येपि—Even when there is equality. Though पार्वती was equal to him in point of asceticism, she shewed him due respect; because he appeared highly venerable, and had something about him which demanded her adoration.

क्षणं परिश्रमं च विनीय नाम Having for a moment feignedly removed his fatigue *i. e.* having rested a while.

अनुज्झितक्रम *adj*. Not without due order, अत्यक्तोचितप-रिपाटीक: । without giving up decorum.

शरीरं खलु आद्यं धर्मसाधनं—Verily the body is the first reqisite for religious works. धर्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभि: साध्यते, तेषु च वपुरेव मुख्यं साधनं, सति देहे, धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गा: साध्यन्ते ।

संभृत *adj*. Grown. जनितं ।

तुलामारोहति—Rises to equality.

ते दंतवाससा—With thy tooth-covering *i. e.* thy lower lip. करस्थान् दर्भान् प्रणयेन स्नेहेनापहरतीति ते तथोक्तेषु ।

प्रचल *adj*. Rolling, tremulous.

प्रयुंजते तवाक्षिसादृश्यमिव-Claims, as it were, equality with thine eyes.

रूपं पापवृत्तये न-That a handsome appearance does not tend to sin.

अव्यभिचारिन् *adj*. Unexceptionable.

उदारदर्शने—O thou with large eyes, अगर्वोन्नतज्ञाने । विवेकवती-त्यर्थ: ।

शील *m. n.* Virtue, morality, steadiness.

विकीर्णैः पर्यस्तैः सप्तर्षीणां संबंधिभिर्बलिभिः पुष्पोपहारैः प्रहसंति ये तथोक्तैः-Smiling with the showered offering of the seven *Rishis*=मरीचिः, अत्रिः, अंगिराः, पुलस्त्यः, पुलहः, क्रतुः and वशिष्ठः ।

सान्वयः सपुत्रपौत्रः ।

त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः तत्र सारः श्रेष्ठः-The most excellent of the three classes of objects, viz. virtue, wealth, and desire.

मनसः निर्विषयौ अर्थकामौ यस्यास्तया-Of whose mind wealth and desire are no objects.

मां संप्रतिपत्तुमवगंतुं नार्हसि-You ought not to consider me a stranger.

संगत *n.* A meeting, a friendship सख्यं ।

सप्तभिः पदैरापद्यते इति सप्तपदोच्चारणसाध्यमुच्यते-As friendship contracted by (the utterance of) seven words (or by seven steps)

संनतगात्रि=संनतांगि ।

द्विजातिभावात्-From the very nature of a twice-born, Brâhmana.

उपपन्नचापलः-Being disposed to restlessness or loquacity.

न चेद् रहस्यं-If it be not a secret.

बहुक्षमा बहूक्तिसहाम्,यद्वा क्षमावतीं ।

उदितं=एकत्रसमाहृतम्-Developed.

अमृग्यं-Does not need to be sought

अतः परमतोऽन्यदधिकं तपःफलं स्याद्वद-Say then what other or what better fruit of asceticism can there be.

दुःसह स्मोढुमशक्याद निष्टाद्धत्रादिकृतादपि-From some intolerable evil or grievance.

नाम *ind.* Possibly.

प्रतिपत्तिः प्रवृत्तिः-Tendency, inclination.

अलभ्यो लब्धुमनर्हः शोकेन भर्त्रा द्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा-Incapable of incurring grief or disregard.

विमानना *f.* Disrespect.

पराभिमर्शः पराधर्षणं ।

पन्नगरत्नसंचये-For taking the gem on the serpent's hood.

अपास्य *ger.* Having cast away.

त्रियामवरी यदि अरुणाय कल्पते-If

the night is adeqnately intended for अरुण—puts on the appearance of dawn.

देवभूमि *f* The divinesites.

उपयंतृ *m* A husband, a bridegroom.

न रत्नं अन्विष्यति–A jewel does not seek an acceptor

मृग्यते हि तत्–It is sought by the would-be recipient.

सोष्मन् *adj.* Warm.

न दृश्यते &c. For no one appears worthy of your desire ; how can then, there be a desired person who is unattainable.

अहो—युवा Oh there is some stern youth desired by thee.

कलमाग्रपिंगल:–Tawny like the extremities of paddy.

श्लथाः शिथिलबंधना अत एव लंबिन्यस्ताः।

दिवाकरेण सूर्येणादृष्टानि दग्धानि वातातपमंस्पर्शान्मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्तां।

सचेतसः—दूयते What sentient man's mind is not afflicted.

प्रियं सौभाग्यमदेन वंचित–Thy beloved one, self defrauded by his pride of beauty.

यः आत्मीयं वक्त्रं अस्य तव चक्षुषः चिरं लक्ष्यं न करोति–Who does not make his face long an object of this eye of thine *i. e.* does not come into the range of thy sight.

तदर्धभागेन लभस्व कांक्षितं वरं–Therefore by the half of that merit receive your desired boon of a bridegroom.

अथोऽनंतरं विवर्तितं विचालितमंजनं अनवशादूर्जितकज्जलं नेत्रं ऐक्षत–Then she looked with averted eyes having the black paint defaced.

वपुः तपःसाधनं कृतं–Her body has been made a means of ascetic practice.

अंभोजं उष्णवारणमिव–Turning, as it were, the lotus itself into a parasol.

वर्णिन् *m.* An ascetic, the Brahmachári.

अधिश्रियः *acc. pl.* The highly rich.

अरूपहार्यं-Not to be over-come by beauty *i e.* who is not subject to personal attractions.

मदनस्य निग्रहात्–From the overthrow of Kàma.

न अपश्यत् अन्यं विधि–She did

not see any other means.
तदा &c. Then by permission of her father this our lady betook herself to the hermitage in our company for asceticism.
प्रार्थित दुर्लभः–That desired but unattainable person.
अभ्युपपत्स्यते इमां सखीं–Will have pity on this our friend.
सखीभिः सास्रोत्तरमीक्षितां–Looked on by her companions with tears.
वृषा इव सीतां अवग्रहक्षतां–Like Indra taking pity on ploughed ground afflicted by drought.
नैष्ठिकसुन्दरः—The loving devotee, the stranger who had come.
अगूढसद्भावं–Manifestly in good will.
इंगितज्ञया तया–By her (Pàrvatî's companion) acquainted with her inmost purpose.
अव्यंजितहर्षलक्षणः—– Whose signs of joy were not manifested.
अयि इदमेवं, परिहासोवा–Dear lady is this so or is it a joke.
मुकुलीकृतांगुली–With the fingers drawn inward.
समर्पयंती–Depositing.
चिरव्यवस्थापितवाक्–Her speech long suppressed.
मिताक्षरमभाषत–Spoke in measured syllables.
उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लंघने आक्रमणे उत्सुकः–Is anxious or ambitious of getting up to high dignity i. e. the dignity of being S'iva's consort.
मनोरथानां अगतिः न विद्यते–But there is nothing to which desire and hope will not resort through delusion.
तदर्थिनी त्वं पुनरेव वर्तसे-And you again are desirous of him. येन त्वं प्राग्भग्नमनोरथा कृतेतिभावः।
तं अमंगलाभ्यासरतिं विचिन्त्य–Considering him to delight in evil habits.
तवानुवृत्तिं न च कर्तुमुत्सहे–I cannot dare to follow you, I cannot serve your purpose in such an evil choice.
अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिविशः परं प्रधानं यस्यास्तस्याः संबुद्धिः–O thou whose determination is set on a nothing i. e. on a despica-

ble object such as S'iva.
आमुक्तविवाह कौतुकः–With the marriage–string or marriage-thread-ring set on it.
कलहंसलक्षणं–On which are pictures of the beautiful swan.
शोणित *n.* Blood.
यदि कदाचित्–If ever.
परोऽपि को नाम तवानुमन्यते-What enemy of thine can even fancy ? i. e. even they ill wishing enemies cannot imagine such a misfortune of thine as (what follows).
पद n. A foot-print or foot-mark.
अलक्तकांकानि लाक्षारंजितानि ।
परेतभूमि *f.* A piece of land where dead bodies are burnt.
त्रिनेत्रवक्षः सुलभं तवापि यत्–That S'iva's embrace will be readily attainable to thee त्र्यंबकालिंगनमित्यर्थः ।
पदं चिताभस्मरजः करिष्यति–The dusty ashes of funeral pyres will form a seat. पदं निधास्यति ।
अयुक्तरूपं किमतः परं वद–Say what can be more incongruous than this.
वारणराजहार्यया–Fit to be carried by a great elephant.
स्मेरमुखो भविष्यति–Will have a smiling face i. e. will laugh and ridicule you,
पिनाकिनः समागमप्रार्थनया संप्रति द्वयं शोचनीयतां गतं &c. By the desire of association with S'iva two have now got to the state of being condoled with or grieved for.
अलक्ष्यजन्मता *f.* Obscurity of origin i. e. his birth and race are unknown.
वरेषु यद् मृग्यते—What is sought or looked for in a a bridegroom ; beauty, wealth, dignity &c.
तदस्ति किं व्यस्तमपि त्रिलोचने–Is that even partially to be found in S'iva.
असद्वांछित *n.* Evil desire.
क तद्विधः–Where such a person, as low and vile.
पुण्यलक्षणा *f.* Of meritorious sign.
श्मशानशूलस्य Of an impaling stake at the cemetery.
प्रवेपमानाधर &c. By her, manifesting anger by the quaking of her nether lip.

तिर्यैगाहिते–Were drawn oblique.

विकुंचितभ्रूलतं–The brow-creeper being contracted.

अलोकसामान्य &c. The dull or ignorant hate the *character* or acts of great men which is not the same as of the world and the causes or motives of which are incomprehensible to them.

विपत्प्रतीकारपरेण मंगलं निषेव्यते By persons who are bent on remedying some evil are used good things. गंधमाल्यादिकं ।

निराशिषः सतः–Being without desire.

किमाभिः &c. What business with these or of what use are these things by which through hope the state of the mind is disturbed, and the emotions perverted.

संपदां प्रभवः–The source of all wealth.

पितृसद्मगोचरः श्मशानाश्रयः सन् ।

शिवः सौभग्यरूपः Felicitous.

विश्वमूर्तेरष्टमूर्तेः शिवस्य ।

विभूषणोद्भासि-Whether it (वपुः) glitters with ornaments.

चिताभस्मरजो ध्रुवं विशुद्धये कल्पते The dust of funeral pyre ashes serves indisputably for sanctification.

प्रभिन्नो मदस्रावी ।

विनिद्र &c. Makes the feet toe-red with pollen of full blown flowers of the celestial tree. विनिद्राणां विकसितानां मंदाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अंगुल्यो ययोस्तौ तथोक्तौ करोति ।

चुतरमना त्वया–By thee demented.

यमामनंति &c Whom the learned or the Vedas declare to be the cause even of the self begotten ब्रह्मा; how can he be of a known origin ?

न कामवृत्तिर्वचनीयमीक्षते–A self willed actor, one who acts from his own desires, regards not what may be said against him.

ममात्र भावैकरसं मनः स्थितं–But my mind is fixed on him with the one sentiment of love.

आलि O dear companion.

न केवलं &c. For not only he who reviles a great person ; but he too who hears

him is also a partaker of the sin.

स्वरूपमास्थाय &c. Then S'iva, whose symbol was the great bull, smiled and assuming his own form took hold of her.

सरसांगयष्टिः–Her body in a sweat.

उद्धृतं उद्धृतं पदं निक्षेपणाय Holding up one foot raised for puting down i. e. taking a step.

मार्गाचल &c. The daughter of the king of mountains neither went on nor stood still like a river stooped in its course by the obstruction of a mountain.

---

## TARANGA 15.

[ A lively description of a cook. ]

### मुकुंदः कलहंसकमयूरकौ प्रति ब्रवीति ।

अथ तावदशिथिलावयवसंधिबंधमज्ञातकैतवकथागंधं, सिंधुमिव जडाशयं, जलदमिव पयोवाहं, जलदकालमिव घनमषीमलिनांबरं, प्रलयानलमिव दग्धकाष्ठावलिं, हरमिवाग्निविकारलोचनं, नारायणमिव भक्तानुकूलव्यापारं, शेषमिवोद्यदर्वीकरं, गरुडमिवाधिगतमहानसं, कृष्णमिव क्षालितकंसमालिन्यं, राममिव मारिचमथनं, भीमसेनमिव दलितज्वलितकीचकशतं, शक्रमिव पाकशासनं, मत्तमातंगमिव करपिष्टनागरं, वैय्याकरणमिव विदितस्वरसव्यंजनप्रक्रियं, वैशेषिकमिव द्रव्यगुणक्रियाजातिविशेषतत्समवायक्रमाभिज्ञं, मीमांसकमिव अर्थभावनास्वरूपज्ञं, सुकविमिव विज्ञातशिखरिणीभेदं, पंडितमिव परिचितसकलरसपरिपाकं, कमपि कज्जलमेचकं पाचकमपश्यम् ।

काशीपतिकविराज—मुकुंदानंदभाणः ।

## तमोवर्णनं ।

विदूषकः—भो मम करस्थापितपाणिर्मसृणनिवेशितपादमुद्रः संचर । यतो बहलालिपटलनिर्मितमिव कोकिलकुलकलितजन्मेव तैलमार्जितकज्जलपुञ्जसंजनितमिव इन्द्रनीलचूर्णसंभूतमिव शितिकण्ठकण्ठसंघटितमिव नारायणतनुविनिर्गतमिव मृगांककलंकनिष्कासितमिव कुवलयदलपरिकल्पितमिव करिदानप्रगतमिव तिमिरचक्रवालमविज्ञातसमविषममनिर्णीतश्यामधवलमपरिच्छिन्नलघुदीर्घमनधिगतदूरसंनिहितं भुवनांतरालं करोति।

राजाः—एवमेतत् ।

तनुरुध्रा इव ककुभः क्ष्मावलयं चरणचारपात्रमिव ।
वियदपि चालिकदघ्नं मुष्टिग्राह्यं तमः कुरुते ॥ १ ॥

राजशेखरः—विद्धशालभंजिका ।

## चंद्रापीडं प्रति शुकनासस्योपदेशकथनं ।

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलतां, कालकूटान्मोहनशक्तिं, मदिराया मदं, कौस्तुभमणेरतिनैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदाचिह्नानि गृहीत्वैवोद्गता । न ह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणपाशसंदाननिस्पन्दीकृतापि नश्यति । उद्दामदर्पभटसहस्रो-

च्छासितासिलतापञ्जरविधृतापि अपक्रामति । मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न वैदग्ध्यं गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमनुबुध्यते । न लक्षणं प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिदपि निर्भरमाबध्नाति पदम् । अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्त्तिम् । अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम् । लतेव विटपकानध्यारोहति । गंगेव वसुजनन्यपि तरंगबुद्बुदचञ्चला । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । हिडिम्बेव भीमसाहसैकहार्यहृदया । प्रावृडिवाचिरद्युतिकारिणी । दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया । स्वल्पसत्त्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम् । गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहु मन्यते । सुजनमनिमित्तमिव न पश्यति । अभिजातमहिमिव लंघयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति ।

मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम् । तथा हि सततमुष्माणमारोपयन्त्यपि जाड्यमुपजनयति । उन्नतिमादधानापि नीचस्वभावतामाविष्करोति । तोयराशिसंभवापि तृष्णां संवर्धयति । ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति । बलोपचयमाहरन्त्यपि लघिमानमापादयति । अमृतसहोदरापि कटुकविपाका । विग्रहवत्यप्यप्रत्यक्षदर्शना । पुरुषोत्तमरतापि खलजनप्रिया । रेणुमयीव स्वच्छमपि कलुषीकरोति ।

यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । तथा हीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां, व्याधगीतिरिन्द्रियमृगाणां, परामर्षधूमलेखा सच्चरितचित्राणां, विभ्रमशय्या मोहदीर्घनिद्राणां, निवासजीर्णवलभी धनमदपिशाचिकानां, तिमिरोद्गतिः शास्त्रदृष्टीनां, पुरःपताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनां, संगीतशाला भ्रूविकारनाटचानाम्, आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्याहाराणाम्, अकालप्रावृड्गुणकलहंसकानां, विसर्पणभूमिर्लोकापवादविस्फोटकानां, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणो, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य ।

न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति पुस्तकमय्यपीन्द्रजालमाचरत्युत्कीर्णापि विप्रलभते, श्रुताप्यभिसंधत्ते, चिं-

तितापि वञ्चयति । एवं विधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः । सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथा ह्यभिषेकसमय एवचैतेषां मंगलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम् । अग्निकार्यधूमेनेव मलिनीक्रियते हृदयम् । पुरोहितकुशाग्रसंमार्जनीभिरिवापनीयते क्षान्तिः । उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम् । आतपत्रमण्डलेनेवापसार्यते परलोकदर्शनम् । चामरपवनैरिवापह्रियते सत्यवादिता । वेत्रदण्डैरिव उत्सार्यन्ते गुणाः । जयशब्दकलकलरवैरिव तिरस्क्रियन्ते साधुवादाः । ध्वजपटपल्लवैरिव परामृश्यते यशः ।

तथा हि केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोनेकदोषोपचितेन दोषासृजेव रागावेशेन बाध्यमानाः, विविधविषयग्रासलालसैः पंचभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचंचलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति । ग्रहैरिव गृह्यन्ते । भूतैरिवाभिभूयन्ते । मंत्रैरिवावेश्यन्ते । सत्वैरिवावष्टभ्यन्ते । वायुनेव विडम्ब्यन्ते । पिशाचैरिव ग्रस्यन्ते । मदनशरैर्मर्माभिहता इव मुखभंगसहस्राणि कुर्वते । धनोष्मणा पच्यमाना इव विचेष्टन्ते । गाढप्रहाराहिता इवाङ्गानि न धारयन्ति । कुलीरा इव तिर्यक्परिभ्रमन्ति । अधर्मभग्नगतयः पंगव इव परेण संचार्यन्ते । मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति । सप्तच्छदतरव इव

कुसुमरजोविकारैरासन्नवार्तिनां शिरःशूलमुत्पादयन्ति । आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । उत्कम्पितलोचना इव तेजस्विनो नेक्षन्ते । कालदष्टा इव महामंत्रैरपि न प्रतिबुध्यन्ते । जातुषाभरणानीव सोष्माणं न सहन्ते । दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम् । तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति । इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति । दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति । अकालकुसुमप्रसवा इव मनोहराकृतयोपि लोकविनाशहेतवः । श्मशानाग्नय इवातिरौद्रभूतयः । तैमिरिका इवादूरदर्शिनः । उपसृष्टा इव क्षुद्राधिष्ठितभवनाः । श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति । चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति । अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति । तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति ।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीधूर्तबकैर्द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगयां श्रम इति, पानं विलास इति, प्रमत्ततां शौर्यमिति, स्वदारपरित्यागमव्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमित्यजितभृत्यतां सुखोपसेव्यत्वमिति नृत्यगीतवाद्यवेश्याभिसक्तिं रसिकतेति, महापराधावकर्णनं महानुभावतेति, परिभवसहत्वं क्षमेति, स्वच्छन्दतां प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, बन्दिजनख्यातिं यश

इति, तरलतामुत्साह इत्यविशेषज्ञतामपक्षपातित्वमिति, दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति । मनसा देवताध्यारोपणविप्रतारणादसद्भूतसंभावनोपहताश्चान्तःप्रविष्टपरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति । त्वगन्तरिततृतीयलोचनं स्वललाटमाशंकन्ते। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। संभाषणमपि संविभागमध्ये कुर्वन्ति। आज्ञामपि वरप्रदानं मन्यन्ते। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः न पूजयन्ति द्विजातीन्। न मानयन्ति मान्यान्। नार्चयन्त्यर्चनीयान् । नाभिवादयन्त्यभिवादनार्हान् । नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम्। जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय। कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपजनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते,

तमाप्ततामापादयन्ति, योहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति, यो वा महात्म्यमुद्भावयति।

किं वा तेषां सांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणमभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः पराभिसंधानपरा मन्त्रिण उपदेष्टारो नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिर्मारणात्मकेषु शास्त्रेष्वभियोगः सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः।

तदेवंप्रायेऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्महामोहकारिणि च यौवने कुमार, तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः। यथा च न प्रहस्यसे विटैर्न प्रतार्यसे कुशलैर्नास्वाद्यसे भुजंगैर्नावलुप्यसे सेवकवृकैर्न वंच्यसे धूर्तैर्न प्रलोभ्यसे वनिताभिर्न विडम्ब्यसे लक्ष्म्या न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैर्न विकृष्यसे रागेण, नापाह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमनेकमंगलम्। कुलक्रमाग-

तामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय स्वबन्धुवर्गम् । अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति इत्येतावदभिधायोपशशाम ।

बाणः--कादम्बरी ।

---

Notes and Meanings.

कैतवकथा *f.* A false tale ; fraudulent talk ; coaxing speech.

जडाशय or जलाशय *adj.* Resting or lying in water ; or stupid, dull, apathetic, cold.

पयोवाह *m.* A water-bearer or milk-bearer.

घनमषीमलिनांबर *adj.* Whose garment was soiled by the thick lampblack ; or the sky was dark owing to the clouds looking like soot or lampblack.

दग्धकाष्ठावलि *adj.* Who has burnt the heaps of fire-wood ; or who has burnt or devastated the row of quarters or regions.

अग्निविकारलोचन *adj.* Whose eyes were sore by the smoke of fire ; or who has an eye formed of fire. S′iva's third eye is full of fiery-elements.

भक्तानुकूलव्यापार *adj.* Whose activity was comformable to the preparation of the cooked-rice, or whose actions were well-disposed towards his devotee.

उद्भटदर्वीकर *adj.* He in whose hand there was a large ladle ; or the serpent who had an expanded hood.

अधिगतमहानस *adj.* Who has got a duty in a kitchen; or who has made is abode on the महानस mountain.

क्षालितकंसमालिन्य *adj.* Who has washed off the impurity of a pot, or who has removed the sinfulness of कंस his maternal uncle.

मारीचमथन *adj.* Who has reduced the chilli into powder; who has killed the demon मारीच.

कीचक *m.* A bamboo, or the name of a demon.

पाकशासन *adj.* Versed in cooking; or the name of Indra.

नागर *m.* An orange; or the नागरमोथा.

स्वरसव्यंजन *n.* Chatni or sauce of inviting flavour.

वैशेषिक *m.* A follower of the वैशेषिक doctrine; a connoisseur.

पदार्थ *m.* The category. कणाददर्शनगतषट्पदार्थाः।

अर्थ *m.* A thing, a substance;

भावना *f.* Imagining, fancying; creating, forming; efficient cause.

मीमांसक *m.* A follower of मिमांसा.

शिखरिणी *f.* A kind of metre or केळ्यांची शिकरण.

कज्जलमेचक *adj.* black like collyrium.

बहल *adf.* Thick; manifold, multifarious.

शितिकण्ठ *adj* A peacock.

तनुरुहा &c. मुष्टिना ग्रहीतु योग्यं अतिघनमिति यावत्। तमः अन्धकारं। कर्तृ। ककुभो दिशः कर्मीभूताः तनुरुहा इव तनौ शरीरे रुहाः संवद्धा इव कुरुते। क्ष्मायाः पृथिव्याः वलयं मण्डलं। कर्म। चारणचारस्य पद्भ्यां गमनस्य पात्रमिवकुरुते। वियदपि आकाशमपि। कर्म। अलिकदघ्नं ललाटपरिमाणं कुरुते।

कल्याणाभिनिवेशी—Intent upon accumulating prosperity or good fortune. कल्याणे मंगलेऽभिनिवेश आग्रहो यस्यैवंभूतस्त्वं।

सुभटाः सांयुगीनाः तेषां खड्गानां कौक्षेयकाणां यन्मंडलं संघातस्तदेव कृष्णत्वसाम्यादुत्पलवनं तत्र विश्रमोऽवस्थितिस्तस्मिश्चंचलत्वसाम्याद् भ्रमरी मधुकरी। For this लक्ष्मी is, as it were, a sprightly female-bee resting on (lit having her abode in) a bed of blue

lotuses composed of the clusters of swords of warriors *i. e.* whoever conquers his enemies by his sword and establishes his power in a kingdom, wins the favour of the Goddess of Fortune.

क्षीर &c. यदा कश्चिद्दूरदेशांतरं गंतुमीहते तदासौ च सहवासिस्मृतिहेतोस्तदीयं किंचिद्वस्त्वादायैव गच्छति, तथेयमपि सहवासजनितो यः परिचयः संबंधविशेषस्तद्वशात्सहवासिपारिजातादीनामित्येतानि वस्तुनि गृहीत्वैवादायैव क्षीरसागराद्दुग्धाम्बुधेरुद्गता प्रादुर्भूता । किंहशानि । विरहः सहवासिभिरसंबन्धस्तस्मिन्विनोदचिह्नानि चित्तालम्बनलक्षणानि । एतानि कानीत्यपेक्षायामाह । पारिजातपल्लवेभ्यो मंदारकिसलयेभ्यो रागं विषयलिप्सामारुण्यं च । इन्दुशकलाचन्द्रलेखादेकान्तवक्रतां कुटिलतां प्रातिकूल्यं च । उच्चैःश्रवस इन्द्राश्वाच्चञ्चलतां चित्तास्थैर्यं चाञ्चल्यं च । कालकूटात्कालकूटनाम्नो विषान्मोहनशक्तिं मूर्च्छोत्पादकशक्तिमन्यवशीकरणशक्तिं च । मदिरायाः कादम्बर्या मदमुन्मादत्वमुन्मोहसंभेदलक्षणं च । कौस्तुभमणेर्नैष्ठुर्यं काठिन्यं निर्दयत्वं चेति ।

अपरिचितं=निर्दाक्षिण्यं ।

इह मार्गे गुणाः शौर्योदयः । ऋजवः । त एव पाशास्तत्सूत्रं यत्संदानं बन्धनं तेन निस्पन्दीकृतापि निश्चलीकृतापि नश्यति प्रपलायते ।

उद्दाम उत्कटो दर्पोऽहंकारो येषामेवंभूता ये भटा योद्धारस्तेषां सहस्रं तेनोल्लासिता ऊर्ध्वीकृता या असिलतास्ता एव पंजरं तत्र विधृतापि स्थापितापि ।

मदजलं दानवारि तदेव श्यामत्वसाधर्म्याद्दुर्दिनान्धकारस्तद्युक्ता ये गजा दन्तिनस्तैर्घटिता निष्पादिता या घना निबिडा घटा समूहस्तया परिपालितापि रक्षितापि ।

परिचयं संस्तवं ।

कुलक्रमं कुलपरिपाटीं ।

लक्षणं मषीतिलकादिसामुद्रिकशास्त्रप्रतिपादितं ।

गन्धर्वनगरलेखा हरिश्चंद्रपुरीति यस्याः प्रसिद्धिः । असद्वस्तुभ्रमो वा ।

अद्यापि इदानीमप्यारूढः प्राप्तो यो मन्दरेण मेरुणा परिवर्तः परिभ्रमस्तज्जनितो य आवर्तः पयसां भ्रमस्तस्माद्या भ्रांतिर्भ्रमिस्तज्जनितः संस्कारो वेगाख्यो यस्याः ।

कमलिनी-The Goddess of Fortune does not lay her foot firmly somewhere on a ground, as if its sole is pricked with a thorn of the lotus-stalk, on account

of her walking over a place full of lotuses.

धारुष्य–She dwells in the edge of swords as if to practise sternness or harshness.

विश्वं प्रविष्टं यस्मिन्रूपे तत् । अथवा विश्वेन रूप्यते निरूप्यते यद्रूपं तद्विश्वरूपं तस्य भावस्तत्त्वं तदिव प्रहीतुं नारायणमूर्तिं जनार्दनशरीरमाश्रिताधिगता ।

अप्रत्ययोऽविश्वासो बहुलो यस्यामेवंभूता सती दिवसांते यथा कमलं स्वाश्रयं मुंचाति तथा स्वाश्रयीभूतं भूभुजमपि । सम्यक्प्रकारेणोपाचितानि वृद्धिं प्राप्तानि । अथ च समुपचितं वर्धमानं मूलं मित्रादि-मूलकंदः, दण्डो नालम्, कोशः कमलाभ्यंतरं, मण्डलं पारिमांडल्यं, एतानि यस्येति विग्रहः । दण्डः करः, कोशो भांडागारः, मण्डलं देशो यस्य ।

लता वल्ली सैव विटा भाण्डादयस्तान्पातीति विटपाः । विटपा एव विटपकाः । पक्षे विटपा वृक्षाः ।

गंगा स्वर्धुनी सैव वसु द्रव्यं तज्जनन्यापि तरंगा भंगा बुद्बुदः स्थासकस्तद्वच्चंचला चपला । पक्षे वसु जलं तस्य तरंगबुद्बुदाभ्यां चांचल्यवती च ।

दिवसकरः सूर्यस्तस्य या गतिर्गमनं सैव प्रकटिताविष्कृता विविधानेकप्रकारा संक्रांतिर्वस्तुनेच्छासंबंधो यया सा । पक्षे राशिषु सूर्यसंबंधः

पातालं वडवामुखं तस्य गुहा कन्दरा सैव तमोगुणस्तेन बहुला दृढा । पक्षे तमोन्धकारः ।

हिडम्बेव घटोत्कचप्रसूरिव भीमसाहसेनातिकठिनकर्मणैकमद्वितीयं हार्यं हृदयं यस्याः । पक्षे भीमस्य वृकोदरस्य यः साहसगुणः ।

अचिरा स्वल्पकालीना या द्युतिः प्रकाशस्तत्कारिणी । पक्षे अचिरद्युतिर्विद्युत् ।

प्रदर्शितः प्रकटीकृतोऽनेकपुरुषाणामुच्छ्रायोऽभ्युन्नतिर्यया सा । पक्षे ऊर्ध्वीकृतभुजापाणिनरमानं पुरुषं ।

स्वल्पसत्वं=अल्पसाहसं ।

अनिमित्तमिव निष्फलमिव ।

अभिजात *adj*. Born of a noble family. कुलीनमिव ।

उन्मत्तमिव ग्रथिलमिव ।

इन्द्रजालमिव कुहकमिव ।

उष्माणं तापं दर्पं वा । जाड्यं शैत्यं ।

अशिवप्रकृतित्वं=अनीश्वरप्रकृतित्वं । ईश्वरतां प्रभुतां । अशिवमशुभं ।

बलोपचयं सैन्यसमूहं । लघिमानं कार्पण्यं ।

विग्रहवती मूर्तिमती कलहवती वा ।

रेणुमयीव रजोगुणमयीव ।

कज्जलवन्मलिनं कश्मलं कर्मोद्वमत्युद्गिरति । दीपशिखापि कज्जललक्षणं यन्मलिनं कर्म तदेवोद्वमति ।

तृष्णा लोभस्तल्लक्षणानां विषवल्लीनां संवर्धने विस्तारणे वारिधारा जलश्रेणिः। अत्र श्रो जलधारयोर्वृद्धिहेतुत्वेन साम्यं । छेदयोग्यतया तृष्णावल्योः साम्यं ।

इन्द्रियमृगाणामक्षहरिणानां । गानलुब्धाश्च मृगा हन्यन्त इति सर्वप्रसिद्धं ।

सच्चरितानि सदाचरणानि तान्येव चित्राणि तेषां परामर्श आचमनं तदर्थे धूमलेखा धूमपंक्तिः। लोकैः कफनिवृत्यर्थं द्रव्यांतरस्य धूम्रपानं कृत्वा पश्चात्स एवोद्गीर्यते। तत्स्पर्शादेवालेख्यं विनश्यतीति भावः।

विभ्रमशय्या=विलासशयनं.

निवासजीर्णवलभी *f.* An old roof or balcony for an abode.

तिमिरस्य नेत्ररोगविशेषस्योद्गतिः प्रादुर्भावः।

क्रोधस्य कोपस्य ये आवेगाः संभ्रमास्ते एव ग्राहा जलजंतवस्तेषामुत्पत्तिनिम्नगा तटिनी।

व्यवहाराणां=आचरणानां ।

अकाल &c. An un-timely rainy-season to the swans of virtues. प्रावृषि हंसा नश्यंति ।

लोकेषु ये अपवादा निरोधोक्तयस्त एव विस्फोटकाः शिलीन्ध्राणि तेषां विसर्पणभूमिर्विस्तारणस्थलं।

साधुभावस्य शोभनाध्यवसायस्य वध्यशाला सूनास्थानम् ।

अपरिचितयासंनिहितया निर्भरमातिशयं नोपगूढः नाश्लिष्टः।

पुस्तकमप्यपि ज्ञानमप्यपि इन्द्रजालवज्जालमाचरति ।

अभिसंधत्ते संशयं करोति ।

सर्वाविनया &c. Because the abode or place of all immodesties.

दाक्षिण्यमनुकूलता ।

पुरोहितः पुरोधास्तस्य कुशाग्राणि दर्भाग्राणि एव संमार्जन्यो बहुकार्यैस्ताभिरिव क्षांतिः क्षमा दूरीक्रियते ।

उष्णीषो मूर्धवेष्टनं स एव पट्टबन्धस्तेनेव जरा विस्रसा तस्या आगमनस्य स्मरणं आच्छाद्यते आव्रियते ।

साधुवादाः ख्यातयस्तिरस्क्रियंते न्यक्क्रियंते ।

श्रमवशेन प्रयासाधिक्येन शिथिलः श्लथोऽदृढः शकुनेर्मयूरस्य । वा पक्षिविशेषस्य। यो गलः कण्ठः तस्य यत्पुटं तद्वच्चपलाभिः। मयूरस्य कण्ठः श्रमवशेन चात्यंतं चपलः स्यादिति तदुपमानं ।

खद्योतो ज्योतिरिंगणस्तस्य यः उन्मेषोऽवभासस्तद्वन्मुहूर्तं मनोहराभिः। उपचितेन: व्याप्तेन ।

रागः आरुण्यं च तेषामावेशस्तन्मयीभावस्तेन बाध्यमानाः पीड्यमानाः। केनेव। दोषं दुष्टं यद्रक्तं

तेनेव । तत्रापि रागो भवत्येवेति साम्यं । Being afflicted by the force or velocity of passion.

विविधा येऽनेके विषया गोचरास्ते एव प्रासा गुडेरकास्तत्र लालसैर्लम्पटैः ।

प्रसरः अवकाशः ।

विह्वलतां=उत्पिजलतां ।

अवष्टभ्यन्ते=हठेन गृह्यन्ते ।

विक्षम्भ्यन्ते=इतस्ततो विक्षिप्यन्ते ।

विचेष्टन्ते=विविधां चेष्टां कुर्वन्तीत्यर्थः ।

कुलीरा इव=कर्कटा इव ।

गतिर्गमनं सत्कर्मणि वृत्तिश्च ।

पंगव इव=खंजा इव ।

सप्तच्छदतरव इव विषमच्छदवृक्षा इव कुसुमानि नेत्राणि तेषां ये रजोभिर्गुणैर्विकारा विकृतयस्तैः । पक्षे कुसुमरजोविकारैः पुष्पपरागविकृतिभिः । सप्तपर्णकुसुमरजःशिरःशूलोत्पादकत्वं वैद्यके प्रसिद्धं। This tree is noted for its bad smell.

तेजस्विनः प्रतापवतः पुरुषानिस्पृहान् ।

कालदष्टः &c. निषिद्धकाले संध्यादिरूपे दष्टा । सर्पेणेति शेषः । एवंविधा इव महामंत्रैर्जांगुलीप्रभृतिभिः चाकृष्ण्यादिभिरपि न प्रतिबुध्यंते न प्रबोधं प्राप्नुवंति ।

जातुषाभरण *n*. The ornaments made of lac.

महामानस्तंभनिश्चलीकृता &c. These princes, like infuriated elephants made stock-still by a post consisting of very great self-conceit, do not listen to good instructions.

मूर्च्छिताः भ्रांताः ।

पानं मधुपानं निषानघर्षणं च ताभ्यां वर्धितं तैक्ष्ण्यं मदक्रौर्यं प्रहारशक्तिश्च येषामेवं विधा इषव इव परोऽन्यो मंत्री च ताभ्यां प्रेरिता नोदित विनाशं जनयंति ।

दण्डो यष्टिर्भागधेयश्च तयोर्विक्षेपाः प्रहारादीनानि च तैर्दूरस्थितान्यपि दविष्टदेशवर्तिन्यपि फलानीव सस्यानीव महाकुलानि महाभिजनानि शातयन्ति पीडयंति पातयंत्यपि च ।

अकाले अकृतौ कुसुमप्रसवा इव । " द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः । फलप्रसवयोर्बन्धं महोत्पातं विदुर्बुधाः " ।

अतिरौद्राः अन्येषां भयोत्पादिका भूतिः संपद्येषां ते तथा । पक्षेऽतिक्रूरा भूतिर्भस्म येषु ते ।

तिमिरं नेत्ररोगः स संजातो येषां ते तैमिरिकास्ते इवादूरदर्शिनः । आसन्नं दोषं नपश्यंतीत्यर्थः । दूरं परलोकं न पश्यंतीत्यर्थोवा । पक्षेऽदू-

[illegible]: समीपस्थितवस्तुविलोकिनः ।
उपसृष्टाः बहिष्कृता इव क्षुद्रैर्विटैरधिष्ठितं भवनं येषां ते ।
"कस्मिंश्चिद्देशे मृतकाणां पुरस्तात् वाद्यानि वाद्यंते इति देशाचारः" ।
अध्यवसाया इव अभिप्राया इव ।
आपूर्यमाणाः=ध्रियमाणाः । आध्मातमूर्तयः स्थूलदेहाः ।
व्यसनानां द्यूतादीनां शतं तस्य शरव्यं लक्ष्यं तस्य भावस्तत्त्वमुपगता इत्यर्थः । Who become the aim of or exposed to hundreds of difficulties.
स्वार्थ &c. स्वस्यात्मनः योऽर्थः प्रयोजनं तस्य निष्पादनं करणं तत्र परैः तत्परैः । धनं द्रव्यं तदेव पिशितं मांसं तस्य ग्रासो ग्रहणं तस्मिन् । गृध्रैर्दूरदृग्भिर्यथा तथा । द्रव्यार्जनपरैरित्यर्थः ।
आस्थानं नृपोवेशनस्थलं तदेव नलिनी कमलिनी तस्यां बकैर्धूर्तैः । यथा बका नलिनीमाश्रित्य तदाश्रयबलेन स्वात्मानमाच्छाद्य येन केन प्रकारेण परान्वंचयित्वा अकस्मादेव परान्भक्षयंति तद्वदास्थानबलेन परान्वंचयित्वा स्वानि भक्षयंति।
वैदग्ध्यं=चातुर्यमित्यर्थः ।
अव्यसनिता=अनासक्तिता ।
[illegible]=[illegible] । "[illegible]" इतिकोशः । गुरुवचनावधारणेन कृतीयं प्रभुरिति भिया-

परे सामंतादयो वश्यत्वं प्रतिपद्यंते इति तेषामाशयः ।
अजित &c. शिक्षार्थं ताडिता भृत्या यस्य राज्ञः सम्यक्सेवां कुर्वंति स जितभृत्यस्तस्य भावस्तत्ता=जितभृत्यता तद्विपरीतकर्म=अजितभृत्यता । इदं च नृपतेर्दूषणं । वैगुण्ये भृत्यानामवश्यं शिक्षा प्रदातव्येति राजचिह्नं । तदुक्तं—"शठदमनमशठपालनमाश्रितभरणं च राजचिह्नानि" इति ।
महापराधावकर्णनं—Listening (without resentment) to plans of crime. महापराधानां कौरवयुध्दादीनां अवकर्णनं श्रवणं।
महानुभावता महाधार्मिष्ठता ।
प्रभुत्वमैश्वर्यं ।
महासत्वता=महाधैर्यता ।
तरलता=चपलता । उत्साहः प्रगल्भता ।
अविशेषज्ञता=विशेषाविशेषानभिज्ञता अपक्षपातित्वं माध्यस्थ्यं ।
दोषानपि गुणपक्षमध्यारोपयद्भिः—Who represent even faults as merits or virtues.
प्रतारणा=वंचना ।
निश्चेतनतया=निर्गता चेतना ज्ञानं यस्मात्तस्य भावस्तत्ता तया ।
दिव्या देवसंबंधिनो येंऽशा भागास्तैरवतीर्णं उत्पन्नमिव ।
प्रारब्धा या दिव्योचिता देवयोग्या चेष्टा क्रियास्ताभिः अनुभावी

महात्म्यं येषां ते तथा।

आत्मविडम्बनां = असद्गुणारोपलक्षणां।

दैवताया हरिहरादेरध्यारोपणं आरोपणं तेन विप्रतारणं वंचनं तस्मादिति। असद्भूतासद्भूता या संभावना देवरूपत्वेन निश्चयस्तेनोपहता विनष्टबुद्धयः।

संविभागः पारितोषिकं दानं तन्मध्ये कुर्वंति।

मिथ्या वृथा यो महात्म्यगर्वो महात्म्याभिमानस्तेन निर्भरा भृता देवताभ्योऽर्हद्भ्यो न प्रणमंति।

नाभ्युत्तिष्ठंति गुरून्—Do not get up from their seats to receive their elders (as is customary).

अनर्थको निष्फलो यः आयासः प्रयासः श्रौतस्मार्तकर्मणि क्लेशस्तेनांतरितं व्यवहितमुपभोगोंऽगनादिकस्तज्जनितं सुखं यस्येति।

तत्र वर्षंति तस्मिन्पुंसि पुनः पुनः प्रदानं कुर्वंति।

तमाप्ततामापादयंति—Regard or consider him as their kindred or relative. आप्ततां—शिष्टतां।

अनवरतं निरंतरं विगतमन्यत्कर्तव्यं यस्यैवंभूत उपरचितांजलिः संयोजितकरसंपुटोऽधिदेवतामिवेष्टदेवमिव स्तौति।

यो वा माहात्म्यमुद्भावयति-Or who creates (false) greatness.

किं वा तेषां सांप्रतं &c. Or what is likely proper for them to whom the crooked policy, which is for the most part, consisting of mischievous instructions terminating in heartlessness, is an authority or evidence?

अभिचारक्रिया कृत्याप्रतिकृत्यादिरूपक्रिया—The employment of spells for a malevolent purpose.

पराभिसंधानपरा परेषामितरेषां अभिसंधानं निरोधस्तत्र परास्तत्परा मंत्रिणः:-Adept in dceiving others.

अभियोग *m.* Exertion, attempt, application.

तदेवं प्राये राज्यतंत्रे &c. Such being, for the most part, the policy (or mode of administration) which is impenetrable by reason of its innumerable crooked actions and troubles.

महामोहकारिणि — Producing many temptations.

भुजंगैर्गणिकापतिभिर्नास्वाद्यसे गणिकार्थे द्रव्यवितरणद्वारा नोपभुज्यसे।

अप्रतिबुद्धं=बोधरहितं ।
मुखरीकृतवान्–Has prompted me to address.
महासत्व *adj*. Adventurous.
प्रतापमारोपयितुं– To display your valour or spread your glory.
त्रैलोक्यदर्शीव सिद्धादेशो भवति– Becomes like a सिद्धादेश (a person who has the power to see every thing in this world) the seer of all things.

---

## TARANGA 16.

[ Lava*n*aprasâda's dream. ]

श्रीवीरधवलस्तस्य सूनुर्वीरशिरोमणिः ।
युद्धे जयाश्रियं धन्वज्यारावैराजुहाव सः ॥ १ ॥
आत्मानमात्मजे तस्मिन्नशेषगुणभूषणम् ।
स पिता दर्पणप्राये संक्रान्तमिव पश्यति ॥ २ ॥
बाहुभ्यामिव विक्रान्तो दन्ताभ्यामिव कुंजरः ।
अधृष्यः पितृपुत्राभ्यां वंशस्ताभ्यां बभूव सः ॥ ३ ॥
कृतविश्वमुदानेन दानेन प्रतिवासरम् ।
सुतेन जनता तेन तातेन च समृध्यते ॥ ४ ॥
अप्यरातिशराघातजातव्रणनतोन्नते ।
वीरलक्ष्मीश्चिरं यस्य वासं वक्षसि वाञ्छति ॥ ५ ॥
वीरः समरकासारे शिरोभिः सह वैरिणाम् ।
करीव पुण्डरीकाणि कन्दयुक्तानि योग्रहीत् ॥ ६ ॥
अरातिराजन्यशराभिघातैः प्रघातभूमौ पतितोत्थितो यः ।
गभीरविरेन्द्रबलाम्बुराशेर्लब्धेव गाधं पुनरुन्ममज्ज ॥ ७ ॥
अथैकदा कन्दलितप्रतापसंतापिताशेषविपक्षपक्षः ।

निशावसाने स निशातबुद्धिः प्राबुध्यत श्रीलवणप्रसादः ॥ ८ ॥
प्रबुद्धमात्रोपि कुमारपुत्रमाकारयामास नृपावतंसः ।
पुरोधसे तत्किल रात्रिदृष्टं शिष्टाय तस्मै विनिवेदयिष्यन् ॥९॥
समेत्य सोमेश्वरदेवनामा नमस्यते स्वस्ति निगद्य चास्मै ।
प्रसन्नमूर्तेः पुरतः स तस्य दृष्टादरो विष्टरमाससाद ॥ १० ॥
पुरस्कृतस्यास्य पुरः पुरारिप्रसादलब्धं लवणप्रसादः ।
वीरेण तेनानुगतः सुतेन तं स्वप्नमित्थं कथयांबभूव ॥ ११ ॥
जानेद्य विद्याधरसुन्दरीभिर्दरीगृहद्वारविहारिणीभिः ।
शृङ्गारितं शृङ्गमहं महाद्रेरारूढवानूढवृषध्वजस्य ॥ १२ ॥
कृतासनं तन्मणिवेदिकायां जायांकितामर्धतनुं दधानम् ।
प्रसन्नवक्त्राब्जमहं सिताब्जैर्जगत्पतिं पूजयितुं प्रवृत्तः ॥१३ ॥
विसृज्य पूजामथ मन्मथारेः समाधिमुद्रां विदधामि यावत् ।
तावत्पुनः कामपि वामनेत्रां राकामिवाकारवतीमपश्यम् ॥ १४ ॥
श्वेतांशुतुल्यं वदनं वहन्तीं श्वेतांशुकां श्वेतविलेपनां ताम् ।
श्वेतां कराग्रे दधतीं च मालामालोक्य बालामतिविस्मितोस्मि ॥
कस्यासि कासि त्वमिहासि कस्मादिति ब्रुवे यावदुपागतां ताम् ।
तावत्तयैवाभिहितोस्मि कान्तदन्तद्युता दत्तसितातपत्रः ॥१६॥
हे वीर वैरिध्वजिनीगजेन्द्रगण्डस्थलीमण्डनखण्डचण्ड ।
प्रत्यर्थिसार्थेन कदर्थ्यमानां जानीहि मां गूर्जरराजलक्ष्मीम्॥१७॥
दिवं गतास्ते बत गूर्जरेन्द्रास्ते कुञ्जरेन्द्राश्च हताः सपत्नैः ।
येषां क्षमाभृद्दलनक्षमेषु भुजेषु दन्तेषु च मे निवासः ॥ १८ ॥
यो वर्तते संप्रति चक्रवर्तिपदेऽत्र बालः स वधान्वरीणाम् ।

क्षमः समग्राणि न निग्रहीतुं दीपस्तमांसीव तटस्थितानि ॥१९॥
ये मन्त्रिणो येत्र च मण्डलीकास्तेषु क्रमो नास्ति पराक्रमोस्ति।
प्रतिक्रिया कास्तु ततोस्ति येषां कामो मयि स्वामिपरिग्रहेपि ॥
आस्ते सहस्तः स पुमान्नकोपि यो मामिमामुद्धरते निमग्नाम् ।
ग्रहीतुमेते हि सतां विभूतिं शतं वितन्वन्ति नराः कराणाम्॥२१॥
सौवस्तिको नास्ति स आमशर्मा वर्मायितं येन सुधर्मणा मे ॥
गतः स मुञ्जीलसुतश्च मन्त्रैर्यैः क्षत्रसर्पानकरोद्विदर्पान् ॥२२॥
न राष्ट्रकूटान्वयकैटभारिः प्रतापमल्लोस्ति मृधैकमल्लः ।
गन्धोपि मत्तारिमतङ्गजानां गन्धद्विपेनेव न येन सेहे ॥ २३ ॥
विनाजगद्देवामिमामवस्थां नीता निजैरेव परैरिवाहम् ।
यत्र स्थिते वेत्रिणि शङ्कितैर्न द्विष्टैः प्रविष्टं पुरि गूर्जराणाम्॥२४॥
अवाप्तवेदाम्बुधिरोधसा च पुरोधसा तेन कुमारनाम्ना ।
विनाद्य चैद्यक्षितिपाललक्ष्मीं को मे करिष्यत्यपरः सपत्नीम् ॥
या मूलराजान्वयजातराजतेजोभिरासीद्विरजस्तमस्का ।
निशागमे सांप्रतमुद्वसायां तस्यां न दीपोपि नरेन्द्रपुर्याम् ॥२६॥
निरंतरं संचरतां गजानां या डिण्डिमैरुड्डमरा ध्वनद्भिः ।
एकाकिनी रात्रिषु गूर्जराणां साफूत्करोतीव शिवारुतैः पूः ॥
क्रीडावतीनां नगराङ्गनानां वक्त्रैः सदा यत्र सरोजसत्ता ।
सरस्तदश्रूणि किरत्यनाथं वातास्तपाथःकणकैतवेन ॥ २८ ॥

मुण्डेव खण्डितनिरन्तरवृक्षखण्डा

निष्कुण्डलेव दलितोज्ज्वलछत्त्रपमा ।

दूरादपास्तविषया विधवेव दैन्य-
मभ्येति गूर्जरधराधिपराजधानी ॥ १९ ॥
तस्मात्स्वचक्रपरचक्रहतावशेषां
निःशेषिताखिलसपत्न समुद्धरस्व ।
यस्मादमानवचरित्रपवित्रितेन
संभावनात्र भवता भुवनैर्जितासौ ॥ १० ॥
एकेन केशिरिपुणा विधृतं यदुच्चै-
र्भारेण भंगुरमिवासुरभूपतीनाम् ।
तद्वीर वीरधवलेन सुतेन भूयः
संभूय भूवलयमुद्धर संप्रति त्वम् ॥ २१ ॥
व्याहृत्य कृत्यमिति सा सहसा च कण्ठ-
पीठे निवेश्य विशदामिह पुष्पमालाम् ।
कुत्रापि तत्र भवती सह निद्रया मे
याताथ यूयमिह जल्पत नः किमेतत् ॥ २२ ॥
इत्थं वदन्नथ हरिप्रतिहस्तकोसौ
सौवास्तिकेन जगदे जगदेकवीरः ।
स्वप्नोयमर्थमकदर्थतया ददानो
व्याख्यानमिच्छति भवानिव नैव देव ॥ २३ ॥
राजन्यधन्यतममन्यमहं न मन्ये
ग्रस्तारिवीरभुजवैभवतो भवत्तः ।
या न स्पृशत्युपनतानपरान्कदापि
यत्वामुपेन्द्रमिव सा वृणुते स्वयं श्रीः ॥ २४ ॥

युष्माद्दशामसद्दशान्वयसंभवानां
न श्लाघ्यते जगति केन कुलार्गलासौ ।
अग्रेसरी भवति दुश्चरितप्रवृत्तौ
या संगरव्यतिकरापसृतौ तु पश्चात् ॥ ३५ ॥
उद्गच्छतस्तव रवेरिव संपराये
छायेव संमुखमुपैति न शत्रुसेना ।
दीपांकुरा इव दशान्तमुपेयिवांस–
स्तेजो निजं मुकुलयन्ति च मण्डलीकाः ॥ ३६ ॥
आनीतवानसि गुणैर्गुरुभिः स्वकीयै–
र्बद्ध्वा नृपाश्रियमिमां सुभटोपभोग्याम् ।
सन्मंत्रिभिस्तदनुरञ्जय मञ्जुमूर्ते
व्यावर्तते न हि यथा त्वदवस्थितासौ ॥ ३७ ॥
दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किं तु
संस्कारमत्र मणिकारगणः करोति ॥ ३८ ॥
पित्रा विचित्ररचितानुकृताच्युतेन
तेनाथ वीरधवलो बलवान्नियुक्तः ।
युक्तश्च भूभरसमुद्धरणे विधात्रा
चिन्तां चकार सचिवेषु शुचिक्रियेषु ॥ ३९ ॥
अथ दशरथकल्पस्त्यक्ततल्पः प्रभाते
स च नृपतिरपत्यं तच्च रामोपमेयम् ।

स च परिचरणीयो गूर्जराणां विशिष्ट-
प्रतिकृतिरुदतिष्ठत्कर्म साध्यं विधातुम् ॥ ४० ॥

सोमेश्वरदेवः-कीर्तिकौमुदी

हम्मीरदेवादिग्विजयवर्णनम् ।

पदप्रपातप्रोद्धूतैरभितोपि रजोव्रजैः ।
छायार्थमिव सैन्यस्य प्रतेने दिवि मंडपः ॥ १ ॥
केचिद्गजानां केचिच्च पत्तीनां केऽपि वाजिनां ।
रथानां केचनावोचन् सैन्ये तस्य प्रभूततां ॥ २ ॥
परःसहस्रैर्गंधर्वैः परोलक्षैश्च पत्तिभिः ।
क्रमात्क्रामन्धरां धीरो प्रापद्भीमरसं पुरं ॥ ३ ॥
तत्र श्रिताभ्यमित्रत्वं गर्जन्नर्जुनभूपतिं ।
कुट्टयित्वासिदण्डेन स्वनिदेशवशं व्यधात् ॥ ४ ॥
ततो मंडलकृद्दुर्गात्करमादाय सत्वरं ।
ययौ धारां धरासारां धारां राशिर्महौजसां ॥ ५ ॥
परमारान्वयप्रौढो भोजो भोज इवापरः ।
तत्रांभोजमिवानेन राज्ञा म्लानिमनीयत ॥ ६ ॥
ततोतिबलभारेण कासारितमहीतलः ।
व्यधादवंतीं दंतींद्रमदाक्तप्रांतकाननां ॥ ७ ॥
शिप्रां विप्रांजलित्यक्तैः सिक्तवप्रां पयःकणैः ।
दृष्ट्वा तस्याऽभवन् सैन्याः सज्जा मज्जनहेतवे ॥ ८ ॥
विमुक्तबंधनास्तत्र कृतमज्जनकौतुकाः ।
नासन् रेवानदीसेवाहेवाकिहृदया गजाः ॥ ९ ॥

धुन्वंतः कंधराकेशान् वाजिनः स्नातनिर्गताः ।
आसारं तेनिरे तीरे तटिन्याः पटुकांतयः ॥ १० ॥
नृपोपि निर्मितस्नानो हितदानैकतानधीः ।
तत्रानर्च महाकालं कालं दुष्कर्मवैरिणां ॥ ११ ॥
प्रविश्य मध्ये मेध्यश्रीविशालां तां निभालयन् ।
नैकशो विक्रमादित्यं सस्मार स्मेरविक्रमः ॥ १२ ॥
विनिवृत्तस्ततो विश्वां विश्वां स्वकरवर्तिनीं ।
सृजन् शौर्यवतां धुर्यश्चित्रकूटमकुट्टयत् ॥ १३ ॥
ततः स्फुटं नटन्मेदपाटपाटनपाटवे ।
प्राप्यार्बुदाद्रिं सांद्रश्रीस्तत्रावासानवेशयत् ॥ १४ ॥
प्रतीभबुद्ध्या बिंबान् स्वान् स्फाटिकीषु शिलास्विह ।
संपश्यतोऽमवं स्तस्य सिंधुराः प्रधनोद्धुराः ॥ १५ ॥
हरिन्मणिगणस्यात्र प्रोल्लसंत्यो मरीचयः ।
नवदूर्वावणभ्रांतिं तद्धयानामजीजनन् ॥ १६ ॥
श्रमेण वर्मभिः सैन्यैरधिशाखं निवेशितैः ।
रेजिरे शैलराजस्य सुभटा इव शाखिनः ॥ १७ ॥
तत्र विश्रम्य विश्रम्य पादपानां तले तले ।
गीयमानानि भिल्लीभिः स्वयशांस्यशृणोन्नृपः ॥ १८ ॥
घनधीध्याततन्नागप्रमोदिशिखिकूजितैः ।
जगाविवार्बुदोऽमुष्य दिग्जयप्रभवं यशः ॥ १९ ॥
कुंभिकुंभवदांभोभिर्द्विगुणीकृतनिर्झरः ।
आरुह्य पृष्ठमस्याद्रेश्चारिमानमलोकत ॥ २० ॥

वसतौ विमलात्मायं विमलस्याऽर्षभप्रभुं ।
ननाम नोत्तमानां हि चित्ते स्वपरकल्पना ॥ २१ ॥
तत्र श्रीवस्तुपालस्य कीर्तनं कलिकर्त्तनं ।
दृष्ट्वासौ विस्मितो नैकवेलं मौलिमकंपयत् ॥ २२ ॥
प्रणम्य महती भक्तिः सर्वदामर्बुदां ततः ।
आश्रमेऽरुंधतीजानेर्विशश्राम क्षणं नृपः ॥ २३ ॥
मंदाकिन्यां विधायोच्चैः स्नपनं शमनं रुजां ।
अपूजयज्जगत्पूज्यमथासावचलेश्वरम् ॥ २४ ॥
साक्षाद्धनंजयस्येह धारातर्षस्य धन्वितां ।
निरीक्ष्य नृपतिर्जज्ञे विस्मयोत्तानलोचनः ॥ २५ ॥
प्रचलद्दलपाथोधिर्मैनाकीकृतवैरिणः ।
अत्राभूत्खर्वदो गर्वः सर्वदोस्यार्बुदेश्वरः ॥ २६ ॥
ततोवतीर्य वर्यश्रीर्निर्धनं वर्धनं पुरं ।
चंगामपि गलद्रंगां चक्रे चक्रेरिविक्रमः ॥ २७ ॥
अजयोपपदं मेरुं मध्येकृत्य स कृत्यवित् ।
पुस्करं तीर्थमासाद्य दुष्करं पुण्यमर्जयत् ॥ २८ ॥
आनर्च भूपस्तत्रादिवराहाख्याधरं हरिं ।
चित्रं दशावतारोपि न यो दाहात्मतां गतः ॥ २९ ॥
प्रयाणपटहध्वानप्रतिध्वनितकंदरान् ।
पश्यन्स्वकीर्तिगानैकतानानिव धराधरान् ॥ ३० ॥
ततः शाकंभरीद्वारि वारस्त्रीवारलोचनैः ।
अभूत्रिपीतलावण्यसर्वस्वो वसुधेश्वरः ॥ ३१ ॥

अदसीयरिपुस्त्रैणगलल्लोचनवारिभिः ।
तद्गादिलवणस्येह मन्ये खानिरजायत ॥ ३२ ॥
ध्वस्तराष्ट्रं महाराष्ट्रं खंड्डिल्लं खंडितप्रभं ।
चंपां च विस्फुरत्कंपां भूपस्तदनु तेनिवान् ॥ ३३ ॥
ककरालं करालश्रि कृत्वाथास्यात्र तस्थुषः ।
श्रीमांस्त्रिभुवनाद्रींद्रो मिलद्दत्तमहोपदः ॥ ३४ ॥
चतसृष्वपि दिक्ष्वेवं स्वाज्ञां राज्ञां स मौलिषु ।
मौलिलीलायितां बिभ्रन् स्वपुरोपांतमासदत् ॥ ३५ ॥

Notes and Meanings.

धन्वस्य धनुषः ज्यारावैः ज्यानिनादैः—By the twanging of the bowstring.

श्रीवीरधवल *m.* A राणा of धोल्का.

दर्पणप्राये—Like a mirror; construe with तस्मिन्नात्मजे.

संक्रांतमिव—As if reflected in the mirror in the form of that son of his.

विक्रांत *adj.* Stepped or passed beyond; valiant, mighty, victorious; (*m*) a hero, a warrior.

कुंजर. *m.* An elephant.

अधृष्यः अजय्यः ।

कृता विश्वस्मिन् अथवा विश्वस्मै मुद् येन तेन ।

समृध् *conj.* 4. 5. P. To be fully furnished with, be completely successful, be fulfilled or accomplished; succeed, prosper; to share in abundantly.

अराति *m.* An enemy.

अरातीनां शत्रूणां शराघातैः बाणप्रहारैर्जाता ये व्रणाः क्षतानि तैर्नतं अत एवोन्नतं तस्मिन् वक्षसि.

पुण्डरीकाणि—Is intended to be taken in a double sense. It means a lotus and also an umbrella.

कन्दयुक्तानि Together with the bulbous or tuberous root of the lotuses. It also signifies the double sense. It means the bulbous root and also the throne.

With the heads of his enemiese he took off their thrones and the white umbrellas.

भराति &c. Who, having fallen down on the battle-field by the blows of the arrows of hostile kings and got up again seemed to emerge after finding out the bottom of the deep ocean of that army of great warriors.

कंदलित *adj*. Put forth, emitted hence manifested, shown.

निशात *adj*. Sharp, whetted, sharpened.

कुमारपुत्रं सोमेश्वरं । आकारयामास आजुहाव ।

सोमेश्वरदेव *m*. The author of this poem, who was *Lavanaprasáda's* religious preceptor and a contemporary to him.

It is laid down that a dream should be related to the preceptor or some holy person; it should not be related to a low or unbelieving person.

शिष्यस्तु शुचिराचान्तः पुष्पहस्तो गुरूत्तमम् । प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत् । नारदपंचरात्रं । काश्यपे दुर्गते नीचे देवब्राह्मणनिंदके । मूर्खे चैवानभिज्ञे च न च स्वप्नं निवेदयेत् । अश्वत्थे गणके विप्रे पितृदेवासनेषु च । आर्ये च वैष्णवे मित्रे दिवा स्वप्नं प्रकाशयेत् । ब्रह्माण्ड० । *Cf*. तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिः शशंस । श्रुत्वा त एनं कुलराजधान्या साक्षात्पतित्वे वृतमभ्यनंदन् । रघुवंशम् ।

विष्टरमाससाद–Took his seat.

पुरारिप्रसादलब्धं–Got through the favour of पुर 's enemy *i. e.* S'iva.

विद्याधरसुंदरीभिः–By Vidyádhara females.

दरी *f*. A valley; a natural or artificial ex-cavation in a mountain; a cave, a cavern.

शृंगारित *adj*. Adorned, decorated, embellished.

ऊढवृषध्वजस्य–Is clear. It is to be solved as a तृतीयाबहुव्रीहि. ऊढः वृषध्वजो येन ।

मणिवेदिका *f*. A quadrangular open shed in the middle of a courtyard purely made of jewels.

जायांकित &c. Having a body the half of which was mark-

ed or occupied by his spouse.

प्रसन्नवक्त्राब्जं जगत्पतिं–The lord of the Universe wearing a pleasing lotus-like face or look.

सिताब्जै: &c. I was prepared to worship him with white lotuses.

समाधिमुद्रां &c. As I was about to employ my mind to the perfect absorption of thought leading to one object of meditation, I saw instantly a female having eyes of transcending charms like the presiding Goddess of moon-light night in the bodily form.

कान्तदन्तद्युत् *f.* Shining with polished ivory-like-teeth; construe with तया.

दत्तं अर्पितं सितातपत्रं श्वेतातपवारणं यस्य स:–Presenting me a large white umbrella of silk. (a symbol of royalty). *Cf.* का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते। आचक्ष्व मत्वा वशिनां रघूणां मन: परस्त्रीविमुखप्रवृत्ति। रघु.।

वैरिणां शत्रूणां ध्वजिन्य: सेना: तासां ये गजेन्द्रा दन्तिवरास्तेषां गण्डस्थलीषु कपोलभित्तिषु यानि मण्डनानि रेखाभूषणानि तेषां खण्डेषु विदारणेषु चण्ड: भीषण: तत्संबुद्धि:।

प्रत्यर्थिसार्थेन कदर्थ्यमानां–Being greatly tormented by the hoards of enemies or hostile kings.

जानीहि &c. Know me to be the Royal Fortune of the Gûrjara Kings. *Cf.* तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन। तस्या: पुर: संप्रति वीतनाथां जानीहि राजन्नधिदेवतां मां। रघुवंशं।

दिवं गता: &c. भुजेषु and दन्तेषु are to be taken with गूर्जरेन्द्रा: and कुंजरेन्द्रा: respectively. The adjective क्ष्माभृद्दलनक्षमेषु qualifies both the locatives भुजेषु and दन्तेषु, क्ष्माभृत् being in the first case taken for kings and in the second for mountains.

सपत्नै: वैरिभि:। निवास: वसति:। य: संप्रति अत्र चक्रवर्तिपदे वर्तते स बाल: समग्राणि तटस्थितानि अरीणां बलानि निग्रहीतुं न क्षम: दीपस्तमांसीव इत्यन्वय:।

तटस्थित *adj.* Situated on a

declivity; or on a bank or shore; standing near.

क्रम m. The hereditary descent; an undertaking, enterprise; intention; manner, method; power strength; uninterrupted or regular progress; order; series; a step, course.

प्रतिक्रिया f. A remedy; counteracting; opposition; requital, retaliation, revenge; recompense; defence; protection; succor, help; care; a fence.

मण्डलीक or माण्डलिक m. The Governor of a province.

ततोऽस्ति &c. What help can I get from them whose intention is to get me (who love me) though I am the wife of their lord. ततः may be taken to mean either from them or againest them. In the latter case we must translate,-what help can 1 get against them.

सहस्त adj. Dexterous or skilled in handling weapons.

एते हि नराः सतां विभूतिं ग्रहीतुं कराणां शतं वितन्वन्ति—For these men (of the above description) will stretch forth hundreds of their hands to take possession of (to appropriate) the property of the good.

आमशर्मन् m. A proper name, a Jaina minister of कुमारपाल.

सौवस्तिक m. A family Bráhmana or priest. (adj.) Benedictive, salutatory.

वर्मायित adj. Well mailed; strongly protected.

सुधर्मन् adj. Keeping well to duty; attentive to duties; (m.) an assembly of the gods; the hall or palace of Indra.

मुञ्जालसुतः Written as मुञ्जालसुत also. Some old statesman of अणहिलवाडपट्टण। मुञ्जाल was a minister of कर्ण.

राष्ट्रकूट m plu. Name of a race=राठोड.

कैटभारि m. An epithet of Vishnu.

प्रतापमल्ल m. A proper name. A राठोड prince.

मृध n. A combat, fight, war, battle.

मल्ल m. An athlete, a very

strong man.

गन्ध *m.* Pride, arrogance and smell, odour, fragrance, scent.

गन्धद्विप *m.* ' scent-elephant', an elephant of the best kind or class, very much feared by other elephants (supposed to emit a peculiar smell).

" यस्य गन्धं समाघ्राय न तिष्ठंति प्रतिद्विपा: । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहं " इति पालकाप्ये । Hemâdri and Châritravardhana quoted in my edition of Raghu.

जगद्देव *m.* The name of an adventurous परमार prince of Dhàrá, who, prior to his accession to the throne served सिद्धराजचौड of अणहिलवाडपट्टण.

वेत्रिन् *m.* A staff-bearer, mace bearer, porter, door-keeper.

द्विष्ट *adj.* Hostile, hated, odious; an enemy.

अप्राप्तवेदाम्बुधिरोधसा च तेन कुमारनाम्ना पुरोधसा विना अद्य कः अपर: चैद्यक्षितिपाललक्ष्मीं मे सपत्नीं करिष्यति इत्यन्वयः ।

अप्राप्तवेदाम्बुधिरोधसा— By him who has got to the other shores of four oceans, or who has reached the other shore *i. e.* the other end of the ocean consisting of the Vedas *i. e.* who has mastered the Vedas.

कुमार *m.* The Name of the father of सोमेश्वरदेव, the poet.

चैद्य *m. plu.* The name of the people of the country called चेदि or Bundelkhand.

विनाद्य &c. Without कुमार, who will now make me the fellow-wife with the Goddess of Fortune of the Kings of the चैद्य people ? This verse refers to the joining under one rule of Soreth and Gujerat.

मूलराज *m.* The name of a King.

विरजस्तमस्का *f.* Free from (the qualities of) passion and ignorance.

उद्वसा *f.* Deserted, abandoned.

या ( पूः ) मूलराजान्वयजातराजतेजोभिः ( पुरा ) विरजस्तमस्का

आसीत् तस्यां उद्वसायां नरेन्द्रपुर्याम् सांप्रतं निशागमे दीपोपि न (दृश्यते) इत्यन्वयः। *Cf*: रात्रावनाविष्कृतदीपभामः कान्तामुखश्रीवियुता दिवापि। तिरस्क्रियंते कृमितंतुजालैर्विच्छिन्नधूमप्रसरा गवाक्षाः। रघुवंशम्।

डिण्डिम *m.* A kind of small drum or tabor.

उड्डमरा *f.* Terrifying an enemy by shouts and gestures.

फूत्करोति=Making a blowing or crackling noise; shouting loudly, shrieking, screaming.

शिवारुतैः By the howlings of female jackals. *Cf.* निशासु भास्वत्कलनूपुराणां यः संचरोभूदभिसारिकाणां। नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः। रघुवंशम्।

सरोजसत्ता *f.* The existence of lotuses or the excellence of lotuses.

यत्र सरसि पुरा सरोजानां कमलानां सत्ता सत्वं सद्भावो वा सदा सर्वेष्वपि ऋतुषु क्रीडावतीनां विलसनशीलानां नगरांगनानां पौरांगनानां वक्त्रैर्मुखैः परिकल्प्यते संपद्यते वा। तदेव सरः कासारः सांप्रतं अनाथं वीतनाथं। अर्थाद्राजरहितं सत्। वातैर्वायुभिरस्ताः उत्क्षिप्ताः ये पायसां जलानां कणाः बिंदवस्तेषां कैतवेन व्याजेन अश्रूणि बाष्पाणि किरति। अथ वा अनाथं यथा स्यात्तथा अश्रूणि प्रकिरति। पुरा सरसि जलकेलिसक्तानां पौरांगनानां सुंदरमुखान्येव दलदरविंदानि ऋतुषट्केऽपि विकचान्यासन्। संप्रति वारिविहारसक्तांगनामुखारविंदाभावात् तत्सरः समीरणोत्क्षिप्तजलतुषारच्छद्मना प्रमुक्तकण्ठं रोदितीवेति यावत्। *Cf.* मुखेन सा पद्मसुगंधिना निशि प्रवेपमानाधरपत्रशोभिना। तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपां। कुमार०। आस्फालितं यत्प्रमदाकराग्रैर्मृदंगधीरध्वनिमन्वगच्छत्। वन्यैरिदानीं महिषैस्तदंभः शृंगाहतं क्रोशति दीर्घिकाणां। रघु०।

मुण्ड *adj.* One with a shaved head, bald pate; stripped of top-leaves or branches.

खण्डिताः लूनाः निरन्तराः सान्द्राः वृक्षाणां खण्डाः यस्याः सा।

निर्गते कुण्डले कर्णभूषणे यस्याः सा।

दलितोज्ज्वलवृत्तवप्रा *f.*—whose two beautiful circles of ramparts have been heaped in ruins.

दूरादपास्तविषया *f.* Who has long left off the objects of sense or who has long

given up the trade-business or transactions.

तस्मात्स्वचक्रपरचक्रहृतावशेषां— For this reason I who am still surviving the seizure of the army of the hostile princes of other countries, as well as of the army of my own people.

अमानवचरित्रपवित्रितेन भवता— By thee made holy by the actions transcending the mortal capacities.

संभावना *f*. Ability; celebrity, fame, honour, regard, esteem, distinction.

आर्जित *adj*. Acquired, gained, got.

केशिन् *m*. Name of an Asura slain by कृष्ण.

संभूय *ger*. Being united, being joined with,

भंगुर *adj*. Apt to break, fragile, brittle; frail, transient, perishable; crooked, bent.

व्याहृत्य &c. Having thus told what I had to do, and having all at once placed around my neck this white garland of flowers, the lady suddenly vanished with my sleep. Now tell us what this is.

प्रतिहस्तक *m*. A deputy, substitute, proxy.

जगदेकवीर *m*. The sole or pre-eminent hero or warrior of the world.

अकदर्थतया— In a way in which the meaning is not hard to find.

अकदर्थता *f*.—The state of usefulness or goodness; the high estimation or value.

राजन्यधन्यतम *adj*. Very fortunate of all Kshatriyas.

ग्रस्ताः गिलिताः । विनाशिता इति यावत् । अरीणां ये वीरास्तेषां भुजाः बाहवः तेषां वैभवं सामर्थ्यं येन सः=ग्रस्तारिवीरभुजवैभवः तस्मात् । ग्रस्तारिवीरभुजवैभवतः। पञ्चम्यास्तसिल् ।

यत् *adv*. For this reason.

उपेंद्र *m*. Name of vishnu, as the younger brother of Indra

असदृशान्वयसंभवानां—Born in a family to which no equal can be found.

दुश्चरितप्रवृत्तौ अग्रेसरी भवति and संगरव्यतिकरापसृतौ पश्चाद्भवति— Which comes forward when one feels an inclina-

tion to do a wrong act, and which places itself behind when one thinks of running away from the throng of the battle-field. Being forward in bad acts and backwards in war, which are in themselves bad, are here applied to अर्गला and the whole verse therefore contains praise of the heroes. The poet means that high birth stands before a man when he feels inclined to rush towards an evil act, and stands behind him when he thinks of retiring ignobly from the battle-field and thus saves him from both the evils.

कुलार्गला *f.* A bar of high birth.

संपराय *m.* Meeting together in strife or encounter, conflict, contention, war battle; calamity, adversity.

दीपांकुरा इव दशान्तमुपेयिवांसः—Flames of light which have gone to the end of their wicks.

मुकुलय *nom.* **P.** To close, cause to close.

आनीतवान् &c. Mark the double sense of गुणैः virtues and strings. The poet hints that a conqueror who seizes a country by force should make it happy by good government, as one who forcibly takes away a young woman from her parents, tries to keep her pleased when she becomes his wife.

सुभटोपभोग्यां—Fit to be enjoyed by distinguished heroes.

मंजुमूर्ते —O prince of agreeable form; of lovely shape.

दृप्यद्भुजाः &c. The lords of the earth, who are very proud of their arms, acquire wealth or gain the (favour of the) Goddess of Fortune; whereas, the ministers bring it up by their political wisdom.

संस्कारमत्र मणिकारगणः करोति—The jewellers or lapidaries give them polish by boring holes in them.

विचित्ररचितानुकृताच्युतेन—Who

was firm in his compliance or execution of wonderful performance or accomplishment.

धुरंधर &c– Looking upon himself as one destined by providence to lift up the burden of the world, he thought of (appointing) ministers of faithful character or actions.

परिचरणीय–*adj*. To be served or attended on.

विशिष्टप्रतिकृति—*m*. An eminent substitute to the sovereignty of Gujerat.

साध्यं कर्म विधातुमुदातिष्ठत्—Got up to execute the business that was within the reach of accomplishment.

पद्मानां चरणानां प्रपातात् निक्षेपणात् प्रोद्भूतैरुद्गतै रजसां धूलीनां अजैर्व्रातैः &c.

छायार्थमिव &c – As if to have a shade for the army a bower of dust was raised in the sky.

प्रभूतता *f*. Abundance, plenty; multitude, great number–

तस्य सैन्ये केचिद्गजानां केचिच्च पत्तीनां केऽपि वाजिनां केचन रथानां प्रभूततां अवोचन् *Cf.* उपस्थमाना गमनाय पश्चात्पुरो निवेशे पथि च व्रजंती। सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार। रघुवंश।

क्रमात्·&c. Gradually travelling on the land the warrior came to the city of भीमरस or सरसपूर.

श्रिताभ्यमित्रत्वं *n*. Who had cherished an idea of making an assault on an enemy.

कुट्टयित्वा=ताडयित्वा।

स्वनिदेशवशं व्यधात्— Forced him to be obedient to his command.

अर्जुन *m*. Name of a king.

मण्डलकृद्दुर्ग *m*. Name of a fort=गढमण्डल।

कर *m*. A tribute.

धरासारा *f*. The essence of the world.

महौजसां वारां राशि:— The ocean of greatest valour or might.

परमारान्वयप्रौढ:— Best of the family of the परमार kings.

म्लानि *f*. Dejection, sadness.

कासारितमहीतल:— Who has made the ground of the earth a lake.

व्यधादवंती &c. And reduced

अवंती to a forest the boundaries of which were smeared with ichor (exuding from the temples) of great elephants in rut, by the vast bulk of his army.

तस्य सैन्याः मज्जनहेतवे सज्जाः अभवन्—His soldiers were ready to plunge into the water of the शिप्रा; सैन्य *m.* A soldier (*n.*) an army.

वप्र *m. n.* The bank of a river.

कृतमज्जनकौतुकाः—Who had already satisfied their curiosity by plunging into the water or who were pleased or delighted by bathing in the water.

रेवानदीसेवाहेवाकिहृदयाः- Whose hearts were anxiously desirous to attend on the river रेवा *i. e.* who were not willing to plunge again in the water of the रेवा, having already satisfied their curiosity by bathing in the water of the शिप्रा.

आसार *m.* Food, provisions of eating such as grass &c.

वाहिनी *f.* A river.

स्नातनिर्गताः=आदौ स्नाताः कृतमज्जनाः पश्चान्निर्गता बहिरागताः।

पटुकान्तयः— Very beautiful, very clever.

हितदानैकतानधीः–Whose mind was fixed on one object of giving gifts beneficial or salutatory to himself; or whose mind was directed to the sole object of gifts to the worthy recipients.

दुष्कर्मवैरिणां कालं महाकालं तत्रानर्च &c. He worshipped there the Mahákála, the destroyer (यम) of enemies on account of their wicked actions; or he worshipped there the Mahakala, the destroyer of those who commit wicked actions and the enemies (of mankind); or he worshiped there the Mahakala, a Kala of the enemies of the wicked actions. काल personified is also a देवर्षि in Indra's court, and a son of ध्रुव; hence it means any deity or god worth propitiation and who bestows favours on those who do not swerve from the right

path दुष्कर्मण: (हेतु:) वैरिणस्तेषां; दुष्कर्माणश्च वैरिणश्च तेषां; दुष्कर्मणां वैरिणस्तेषां ।

मेध्यश्रीविशाला— Eminent or illustrious on account of the sacredness of ceremonial purity; or the city of विशाला celebrated for its sacredness of ceremonial purity.

निभालयन् *p. p.* Perceiving, seeing.

एकश: *ind.* One by one, singly.

स्मेरविक्रम:— Whose might or valour was apparent or evident ; proud of his valour or might

विक्रमादित्य *m.* Name of a king.

विश्वा *f.* Troops, forces, hence an army

शौर्यवतां धुर्य:— The chief of warriors or heroes.

सृज् *conj.* 6. P. To quit, leave, abandon ; to let go, let loose ; send forth, let flow pour out, shed ; to let off, throw, cast.

विनिवृत्त: &c. Thence he returned sending forth the whole of his army obedient to his command.

विश्वा *f.* Troops, forces, army.

मेदपाट *m.* Name of a country, the modern मेवाड.

पाटन *n.* Destroying; tearing up, breaking, cutting to pieces.

पाटव *n.* skill cleverness, dexterity; talent; quickness. *(m)* A descendant of पटु; a pupil of पटु.

नट् *conj.* I. P. To act, injure; to injure by any deceptive trick; to speak or shine; to dance or perform as an actor; to effect, produce.

स्फुट *adv.* Distinctly; manifestly, evidently, certainly.

स्फुटं नटन्–Making a shew of ostentatious pride; acting so as to betray his pompous pride; or making a particular business of destroying &c.

सान्द्रश्री:–Of a pleasing or agreeable majesty or royalty; of a pleasing grace or loveliness or beauty; of a very great fame or renown.

अर्बुदाद्रि *m.* The mountain of Abu.

आवास *m.* A tent, पटगृहं ।

सिंधुर *m.* An elephant.

इह स्फाटिकीषु शिलासु स्वान् बिंबान् संपश्यतस्तस्य सिंधुराः प्रतीभबुध्या प्रधनोद्धुराः अभवन् इत्यन्वयः ।

प्रतीभबुध्या—Under the idea or impression of a hostile elephant standing opposite to him. इभः—गजः.

प्रधनोद्धुराः—Who had shaken off their yokes for fighting or combating.

हरिन्मणिगणस्य—Of a green multitude of pearls.

मरीचि *f. m.* A ray of light.

प्रोल्लसंत्यः—Shining brighthy, glittering.

वर्मन् *n.* A defensive armour, a coat of mail, an armour.

अधिशाखं *adv* On the branches of trees, शाखायामिति ।

गीयमानानि भिल्लीभिः—Being chanted by the भिल्ल females.

घनधिध्यात &c. The mountain Arbuda as if chanted his glory or fame arising from the conquest of quarters by the cooing or warbling of peacock delighted at the sight of king's elephants under the idea or impression of a cloud.

कुंभिकुंभ *m.* The frontal globe or the upper part of the forehead of an elephant (there are two of these projections which swell in the rutting season).

निर्झर *m.* A rivulet, a mountain-torrent.

चारिमान=चारिणां मानस्तं or चारिणश्च मानाश्च तेषां समाहारः । The dwellings of the soldiers, or the soldiers and the dwellings. Or चारिणां मानं= The extension of the roads or army. Or he saw there footpaths and the buildings.

आर्षभप्रभुं=ऋषभस्यायं आर्षभः सचासौ प्रभुश्च । ऋषभदेव *m.* Name of the first Arhat of the present अवसर्पिणी, a son of नाभिः and मरुदेवा.

विमल *m.* An Arhat or Jaina deified sage.

उत्तमानां हि चित्ते स्वपरकल्पना न— For the great do not make invidious distinctions.

वस्तुपाल *m.* Name of the minister of लवणप्रसाद, the

king of Gujerat.

महती भक्तिर्यस्य=महतीभक्तिः In forming बहुव्रीहि compounds with Adjectives, the special feminine terminations are rejected, but not if they are used *as substantives denoting females* or as special Names. Panini gives different rules under VI. 3. 35. to 45: "दृढभक्तिः" (not दृढाभक्तिः); but "भ्रांतिदूतीसहाया, पाचिकाभार्यः"।

अरुंधतीजानि *m*. Arundhati's husband. अरुंधती जाया यस्य सः। "जायाया निङ्" जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्=जाया the last member of a बहुव्रीहिः compound becomes जानि; हतजानिः, युवजानिः=having a young wife.

अर्बुदा *f*. Name of the goddess of the mountain Abu.

मंदाकिनी *f*. Name of a river flowing near the mountain Abu.

स्नपन *n*. Bathing, ablution.

अपूजयत् &c. After which he paid his devotions to अचलेश्वर adorable to the world.

धनंजय *m*. Arjuna's name.

तर्ष *m*. The ocean; the sun; a raft or float; Desire personified as a son of अर्क and वासना; desire, wish; thirst.

धारा *f*. A shower, any continuous line or series; fame, excellenc, pre-eminnence.

धारातर्षस्य—Of the ocean of fame or renown.

विस्मयोत्तानलोचनः——Whose eyes were spread out through wonder or amazement.

पाथोधि *m*. The ocean.

मैनाक *m*. Name of a mountain.

अत्र सर्वदोर्बुदेश्वरः सर्वदो मर्वः अभूत्—On this mountain the all-giving king of अर्बुद was brought down or abased of his haughtiness or pride, i e. the king of Abu was a famous warrior but his prowess little availed him at this juncture, and he was obliged to submit to Hammira.

वर्धश्रीः— To be solicited by the Goddess of Fortune.

चर्मनपुर *n.* Name of a town.
चंगा *f.* Name of a town.
चंगामपि गलद्रंगां चक्रे— Made चंगा void of its mirth ; or made चंगा destitute of its battle-fields.
अरिविक्रम:—Exhibiting his valour or might to the hoards of his enemies.
अजयोपपदं मेरुं=अजयमेरु:= Ajamer, name of a city in Marwada.
पुष्कर *n.* Name of a celebrated place of pilgrimage now called Pokur in the district of Ajmere, about five miles from the city of Ajmere, consisting of a small town on the bank of a lake, said to be one of the most sacred in India ; in this sense also पुष्कराणि.
आनर्च &c. There the king paid his devotions to हरि known by the title of आदिवराह. Wonder ! though there was the tenth incarnation of Vishnu, he has not put his self to decay.
मयाण &c. Looking at the mountains whose caves were resounding with the echoes of his marching-drums( *i. e.* at the time of the march of his army).
स्वकीर्तिगानैकतानानिव— The mountain-caves producing, as it were, the musical harmony of the songs,— the theme of his glory.
शाकंभरि *f.* Name of a town.
वारस्त्री *f.* A courtezan. वारस्त्रीणां वारा: समूहा: तेषां लोचनानि तै: ।
वार *m.* A multitude, quantity, heap ; a flock, herd trcop.
निपीतलावण्यसर्वस्व:——Whose symmetrical body containing all treasures of loveliness or beauty was drunk up by the multitudes of eyes of courtezans &c.
अदसीयारिपक्ष्मैणगललोचनवारिभि: = अदो भवा: अदसीया:, By the tears dropping down from the eyes of the multitudes of women of enemies of that king *i. e.* Hammira.
तदादिलवणस्य &c. From that day I think a mine of the first salt has been produced here.

महाराष्ट्र *n.* The Mahratta Country; the land of the Mahrattas in the west of India; a town of the Mahrattas.

खंड्डिल्ल *m.* A town of the Khanddillas.

चंपा *f.* A town of the Champas.

तन् *conj.* 8 P. A. To ravage, to plunder.

कङ्कराल *n.* Name of a town; the modern Kánkroli.

करालश्रि *adj.* Of great riches, or wealth; or करालं असर्जितत् solely depending on the expolits achieved by the strength of sword.

त्रिभुवनाद्रींद्र *m.* Name of a King.

अमिलद्दत्तभद्रोपदः—Met him and presented him many rich gifts.

मौलिलीलायित *adj.* Sportively carried by their heads *i. e.* implicitly obeyed. मौलिभिर्लीलायितां।

---

## TARANGA 17.

[ The story of वीरवर. ]

आसीत् सकलराजलक्षणोपेतः सार्वभौमो राजा शूद्रको नाम। एकदा अमात्यगणपरिवृतस्य परिषदमधिष्ठितस्य राज्ञः पुरद्वारि देशान्तरादागत एको राजपुत्रः पुत्रभार्यासमेतो वर्तनार्थी दौवारिकमब्रवीत्। भो दौवारिक, मामवेहि राजपुत्रम्, अहं पुत्रभार्यासहायः शूद्रकमहाराजस्य यशः श्रुत्वा वर्तनार्थी समागत्य तिष्ठामि। मम वृत्तान्तं राज्ञे विज्ञापय। श्रुत्वैतत् प्रतीहारी राजानं विज्ञापयामास। अथ दौवारिकेण आनीयमानं तमवलोक्य राजा पप्रच्छ, को भवान्, किमर्थमिहागत्य मिलित इति। स ब्रूते, देव, वीरवरनामा क्षत्रियोऽहं सेवाकांक्षी समागत्य

[illegible]ामि । राजा वदति, किं जीवनं कर्तव्यं तद् वद । वीरवरेणोक्तं, प्रत्यहं सुवर्णशतचत्रयं ददातु देवः । राजाब्रवीत्, अहो, अत्र बहवो गुणवन्तः सन्ति, केषामपि एतावज्जीवनं न विद्यते । तत् श्रुत्वा वीरवरः प्रणम्य चलितः । ततः सान्धिविग्रहिकेणोक्तं, देव, एतेन मा कातरो भव, दिवसकतिपयं एतावज्जीवनं दत्वा वीरवरः परीक्ष्यताम् । बहुलधनमपि विनष्टं न भविष्यति । ततो राज्ञा पुनरानीय यथाभिलाषितं वर्तनं दत्वा स्थापितोऽयं वीरवरो वर्तनधनस्यार्धं ब्राह्मणेभ्यो दत्वा चतुर्थांशमन्धपंगुजनेभ्यो दत्वा अवशिष्टचतुर्थांशेनात्मानं वर्धयति । एवं राजसेवां कुर्वन्नास्ते ।

अथैकदा दक्षिणस्यां दिशि रात्रौ एका स्त्री करुणस्वरेण रोदिति । तच्छ्रुत्वा राजा वदति, कोऽत्र द्वारि तिष्ठति । वीरवरेणोक्तं, देव, अहमस्मि । नृपेणोक्तं, वीरवर, का रोदिति, तां निश्चित्य मां ज्ञापय । ततोऽयं गतः । राजापि तस्य तत्वं ज्ञातुमनुपलक्षितो जगाम ।

वीरवरस्तत्र गत्वा रुदतीं काञ्चित् स्त्रियमालोक्याब्रवीत् । मातः, भवती किमर्थमेकाकिनी रोदिति । सा तु यत्नेन पृष्टा ब्रूते, वत्स, अहं शूद्रकस्य लक्ष्मीः । स महात्मा प्रातःकाले नाशं गमिष्यति । तदहमिदानीं कुत्र स्थास्यामि, इति रोदिमि । तत् श्रुत्वा वीरवरेणोक्तं, मातः, भगवती यथा चिरस्थायिनी राजा च चिरजीवी भवति, तदुपायं वदतु भवती, अहं तावत् करोमि । लक्ष्मीर्ब्रूते, वत्स, तद्दुष्करं कर्म कः करिष्यति ।

वीरवरेणोक्तं, मयाशक्यमपि कर्तव्यमिति वदतु भवती । लक्ष्मी-र्ब्रूते, यदि द्वात्रिंशल्लक्षणोपेतं पुत्रं समानीय तन्माताभगिन्यौ तच्चरणौ दधाते, स्वयमपि स्वेच्छया पिता तं कात्यायन्यै बलिं ददाति, तदा राज्ञः शोभनं भवति । केषाकर्षणशिरच्छेदं यदि पुत्रः स्वीकरोति, तदैव, नान्यथा, इति निगद्य लक्ष्मीरन्तर्हिता बभूव । राजा सर्वं श्रुत्वा तदनुसरणं करोति ।

अथ वीरवरः सहसा स्वगृहं गत्वा पत्न्यां पुत्रे दुहितरि च सर्वमकथयत्, प्राबोधयच्च । तच्छ्रुत्वा पत्नी वदति, यद्येतद् दुष्करं कर्म न कर्तव्यं तदा परलोके निस्तारः कथं भविष्यति । तत्पुत्रः शक्तिवरः सानन्दं ब्रूते, धन्योऽहं, यन्मरणे राजा चिरजीवी, राज्यस्य च निस्तारो भविष्यति । दुहिता चाभिनन्द-ति । राजा सुगुप्तः सर्वं श्रुत्वा अनुपलक्षितस्तिष्ठति ।

ततो वीरवरः सपरिवारस्तत्र गत्वा तेनैव विधिना राज्ञो विप-त्तिक्षयहेतवे स्वपुत्रं भगवत्यै बलिं दत्त्वा तच्छोकं परिहर्तुं राज्ञो दीर्घायुष्यकामस्तेन खड्गेनात्मनः शिरश्चिच्छेद । गुरुतरशो-केन वीरवरपत्नी दुहिता च नृपतेर्दीर्घायुष्यकामा स्वशिरश्चिच्छे-द । सर्वमेतदवलोक्य सपरिवारवीरवरस्य सात्त्विकत्वमधिगम्य साश्चर्यं चिन्तयामास,—

जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥

एतत्परित्यक्तेन राज्येनापि किं प्रयोजनम् । ततः स्वशिरच्छे-त्तुमुल्लासितः खड्गः शूद्रकेणापि । अथ भगवत्या कात्यायन्या प्र-

त्यक्षीभूतया राजा करे धृतः । राजा साष्टांगं प्रणम्योवाच, देवि, न मे राज्येन जीवितेन वा प्रयोजनमस्ति । यदि मय्यनुकम्पा क्रियते, तदा मदायुःशेषेणाप्ययं सपरिवारो वीरवरो जीवतु । अथ देवीप्रसादाद्वीरवरे सपरिवारे जीविते राजाऽनुपलक्षितः सहसा स्वगृहमागतः । प्राप्तजीवनश्च वीरवरः पत्नीं पुत्रं दुहितरं च स्वगृहं प्रस्थाप्य नृपद्वारमागतः । तमायातमालोक्य राजा वदति, वीरवर, का रोदितीति रहस्यं कथय । स इति पृष्टो ब्रूते, देव, एका स्त्री दुःखिनी रोदिति, तां निःसार्यागतोऽस्मि । राज्ञोक्तं, वत्स, स्वगृहं गच्छ । अथापरदिने राजा सर्वामात्यान् समानीय वीरवरस्य सपरिवारस्य सात्विकत्वं निगदितवान् । ततः सर्वे विस्मिता बभूवुः । तदा वीरवरप्रसादाद् राजा सार्वभौमो बभूव । तेन च बहुतरहयहस्तिधनजनमणिरत्नानि दत्वा वीरवरः शेखरदेशे राजा कृतः ।

जम्बलदत्तः--वेतालपंचविंशतिः ।

---

## स्यमन्तकोपाख्यानम् ।

निघ्नस्य राज्ञो द्वौ पुत्रौ बभूवतुः प्रसेनः सत्राजितश्च । एकदा तु अम्भोधेस्तीरसंश्रयः सूर्यं सत्राजितस्तुष्टाव । तन्मनस्कतया च भास्वानभिष्टूयमानोऽग्रतस्तस्य तस्थौ । अस्पष्टमूर्तिधरं चैनमालोक्य सत्राजितः सूर्यमाह, यथैव व्योम्नि त्वां वह्निपिण्डोपममहमपश्यम् तथैवाद्याग्रतो गतमप्यत्र न काञ्चिद् भगवता प्रसादीकृतं विशेषमुपलक्षयामि ।

इत्येवमुक्ते, भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनामा मणिरवतार्य एकान्ते न्यस्तः। ततस्तमाताम्रोज्ज्वलवपुषमीषदापिङ्गलनयनमादित्यमद्राक्षीत्। कृतप्रणिपातस्तवादिकं च सत्राजितमाह भगवान्, वरमस्मत्तोभिमतं वृणीष्वेति। स च तदेव मणिरत्नमयाचत। स चापि तस्मै तद् दत्त्वा वियति स्वधिष्ण्यमारुरोह।

सत्राजितोऽपि अमलमणिरत्नसनाथकण्ठतया सूर्य इव तेजोभिरशेषदिगन्तराणि उद्भासयन् द्वारकां विवेश।

द्वारकावासिजनपदस्तु तमायान्तमेत्य भगवन्तं पुरुषोत्तमं प्रणिपत्याह, भगवन्, भगवन्तमयं नूनं द्रष्टुमायात्यादित्यः। इत्याकर्ण्य प्रहस्य च तानाह भगवान्, नायमादित्यः, सत्राजितोऽयमादित्यदत्तं स्यमन्तकाख्यं महामणिं बिभ्रदत्रोपायाति, तद्देनं विश्रब्धाः पश्यत, इत्युक्तास्ते ययुः।

स च तं स्यमन्तकाख्यं महामणिमात्मनिवेशने चक्रे। प्रतिदिनं च तन्मणिरत्नमष्टौ कनकभारान् स्रवति। तत्प्रभावाच्च सकलस्यैव राष्ट्रस्यानावृष्टिव्यालाग्निचौरदुर्भिक्षादिभयं न भवति।

अच्युतोपि, तद्रत्नमुग्रसेनस्य भूपतेर्योग्यमेतदिति लिप्साञ्चक्रे गोत्रभेदभयाच्च शक्तोऽपि न जहार।

सत्राजितोऽप्यच्युतो मामेतद् याचिष्यते इत्यवगतरत्नलोभः स्वभ्रात्रे प्रसेनाय तद्रत्नं दत्तवान्। तच्च शुचिना ध्रियमाणमशेषसुवर्णस्रावादिकं गुणमुत्पादयति, अन्यथा य एव धारयति तमेव हन्तीति। असावपि प्रसेनः स्यमन्तकेन कण्ठासक्तेनाश्वमारुह्या-

कदाचित् मृगयामगच्छत् । तत्र च सिंहाद्वधमाप । साश्वं च तं विहत्य सिंहोऽप्यमलमणिरत्नमास्याग्रेणादाय गन्तुमुद्यत ऋक्षाधिपतिना जाम्बवता दृष्टो घातितश्च । जाम्बवानप्यमलं तन्मणिरत्नमादाय स्वबिलं प्रविवेश, सुकुमारकसंज्ञाय च बालकाय क्रीडनमकरोत् ।

अनागच्छति च तस्मिन् प्रसेने, 'कृष्णो मणिरत्नमभिलषितवान् न च प्राप्तवान्, नूनमेतदस्य कर्म्म नान्येन प्रसेनो हन्यते,' इत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् ।

विदितलोकापवादवृत्तान्तश्च भगवान् यदुसैन्यपरिवारः प्रसेनाश्वपदवीमनुससार, ददर्श चाश्वसमेतं प्रसेनं निहतं सिंहेन । अखिलजनपदमध्ये सिंहपददर्शनकृतपरिशुद्धिः सिंहपदमनुससार। ऋक्षविनिहतं च सिंहमप्यल्पे भूमिभागे दृष्ट्वा तद्रत्नगौरवादृक्षस्यापि पदान्यनुययौ । गिरितटे च सकलमेव यदुसैन्यमवस्थाप्य तत्पदानुसारी ऋक्षबिलं प्रविवेश । अर्धप्रविष्टश्च धात्र्याः सुकुमारकमुल्लापयन्त्या वाणीं शुश्राव,—:

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक, मा रोदीस्तव ह्येष स्यमन्तकः ।।

इत्याकर्ण्य लब्धस्यमन्तकोदन्तोऽन्तःप्रविष्टः कुमारक्रीडनकीकृतं च धात्रीहस्ते तेजोभिर्जाज्वल्यमानं स्यमन्तकं ददर्श । तं च स्यमन्तकाभिलाषचक्षुषमपूर्वं पुरुषविशेषमागतमवेक्ष्य धात्री त्राहि त्राहीति व्याजहार ।

तदार्तनादश्रवणानन्तरं चामर्षपूर्णहृदयः स जाम्बवानाज-

गाम । तयोश्च परस्परं युध्यतोर्द्वयोर्युद्धमेकविंशतिदिनान्यभवत् । ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिमुदीक्षमाणास्तस्थुः । अनिष्क्रममाणे च मधुरिपौ, असाववश्यमत्र बिलेऽत्यन्तनाशमाप्तो भविष्यति, अन्यथा तस्य कथमेतावन्ति दिनानि शत्रुजये व्याक्षेपो भवति, इति कृताध्यवसाया द्वारकामागता 'हतः कृष्णः' इति कथयामासुः । तद्बान्धवाश्च तत्कालोचितमखिलमुपरतक्रियाकलापं चक्रुः । तत्र चास्य युध्यमानस्यातिश्रद्धादत्तान्नतोयादिना कृष्णस्य बलप्राणपुष्टिरभूत् । इतरस्य चानुदिनमतिगुरुपुरुषभिद्यमानस्यातिनिष्ठुरप्रहारपीडिताखिलावयवस्य निराहारतया बलहानिः । निर्जितश्च भगवता जाम्बवान् प्रणिपत्याह, असुरसुरयक्षगंधर्वराक्षसादिभिरपि भगवान् न जेतुं शक्यः, किं पुनरवनिगोचरैरल्पवीर्यैरस्मद्विधैः । अवश्यं भगवतोऽस्मत्स्वामिनो नारायणस्यांशेन भगवता भवितव्यम् । तं च भगवान् प्रीत्या करतलस्पर्शेनेनापगतयुद्धखेदं चकार । स च प्रणिपत्यैनं पुनरपि प्रसाद्य जाम्बवन्तीं नाम कन्यां गृहागमनार्घ्यभूतां ग्राहयामास । स्यमन्तकमणिमप्यसौ प्रणिपत्य तस्मै प्रददौ । अच्युतोऽप्यतिप्रणतात्तस्मादग्राह्यमपि तन्मणिरत्नमात्मशोधनाय जग्राह, सह जाम्बवंत्या च द्वारकामाजगाम ।

भगवदागमनोद्भूतहर्षोत्कर्षस्य द्वारकावासिजनस्य कृष्णावलोकनानुक्षणमेवातिपरिणतवयसोऽपि नवयौवनमिवाभवत् । आनकदुन्दुभिं च दिष्ट्या दिष्ट्येति सकलयादवाः स्त्रियश्च सभाजयामासुः ।

भगवानपि यथानुभूतमशेषयादवसमाजे यथावदाचचक्षे । स्यमन्तकं च सत्राजिताय दत्वा मिथ्याभिशस्तिविशुद्धिमवाप, जाम्बवतीं चान्तःपुरे निवेशयामास ।

व्यासः—विष्णुपुराणं ।

---

## इक्ष्वाकुवंशः ।

ब्रह्मणश्च दक्षिणांगुष्ठजन्मा दक्षः प्रजापतिः । दक्षस्याप्यदितिः । अदितेर्विवस्वान् । विवस्वतो मनुः । क्षुवतश्च मनोरिक्ष्वाकुर्घ्राणतः पुत्रो जज्ञे । स चेक्ष्वाकुः, अष्टकायाम् ‘ उत्पाद्य श्राद्धार्हं मांसमानय ’ इति स्वपुत्रं विकुक्षिमाज्ञापयामास । स ‘तथा’ इति गृहीताज्ञो वनमभ्येत्य, अनेकान्मृगान् हत्वा, अतिश्रान्तोऽतिक्षुत्परीतो विकुक्षिरेकं शशमभक्षयत्; शेषं च मांसमानीय पित्रे निवेदयामास ।

इक्ष्वाकुणापीक्ष्वाकुकुलाचार्यस्तत्प्रोक्षणाय वशिष्ठः प्रणोदितः प्राह,—अलमनेनामेध्येनामिषेण । दुरात्मनानेन ते पुत्रेणैतन्मांसमुपहतं, यतोऽनेन शशको भक्षितः ।

ततश्चासौ विकुक्षिर्गुरुणैवमुक्तः शशादसंज्ञामवाप, पित्रापि च परित्यक्तः, पितर्युपरते चाखिलामेतां पृथ्वीं धर्मतः शशास । शशादस्य च पुरञ्जयो नाम पुत्रोऽभवत् ।

इदं चान्यत्–पुरा हि त्रेतायां, दैवासुरमतीवभीषणं युद्धमासीत् । तत्र चातिवलिभिरसुरैरमराः पराजिता भगवन्तं विष्णुमाराधयाञ्चक्रुः ।

प्रसन्नश्चदेवानामनादिनिधनः सकलजगत्परायणो नारायणः प्राह,—ज्ञातमेव मया, युष्माभिर्यदभिलषितं, तदर्थमिदं श्रूयतां, पुरञ्जयो हि नाम शशादस्य च राजर्षेस्तनयः क्षत्रियवर्यः। तच्छरीरेऽवाहमंशेन स्वयमेवावतीर्य, तानशेषानसुरान् निहनिष्यामि, तद्भवद्भिः पुरञ्जयोऽसुरवधार्थमिह कार्योद्योगः कार्य इति।

एतच्छ्रुत्वा, प्रणम्य भगवन्तं विष्णुममराः पुरञ्जयसकाशमाजग्मुरूचुश्चैनं,—भो भोः क्षत्रियवर्य, अस्माभिरभ्यर्थितेन भवतास्माकमरातिवधोद्यतानां साहायकं कृतमिच्छामस्तद्भवतास्माकमभ्यागतानां प्रणयभंगो न कार्यः।

इत्युक्तः पुरञ्जयः प्राह,—सकलत्रैलोक्यनाथो योऽयं युष्माकमिन्द्रः शतक्रतुरस्य यद्यहं स्कन्धमारूढो युष्मदरातिभिः सह योत्स्ये, तदाहं भवतां सहायः।

इत्याकर्ण्य समस्तदेवैरिन्द्रेण च 'बाढम्' इत्येवमन्वीप्सितम्।

ततश्च शतक्रतोर्वृषभरूपधारिणः ककुत्स्थो हर्षसमन्वितो भगवतश्चराचरगुरोरच्युतस्य तेजसाप्यायितो देवासुरसंग्रामे समस्तानेवासुरान् निजघान। यतश्च वृषभककुत्स्थेन राज्ञा निषूदितमसुरबलं, ततश्चासौ ककुत्स्थसंज्ञामवाप।

ककुत्स्थस्याप्यनेनाः पुत्रोऽभूदनेनसः पृथुः। तस्य च सन्तानपरम्परयाधस्तनो द्वादशो युवनाश्वोऽभवत्।

तस्य चापुत्रस्यातिनिर्वेदान्मुनीनामाश्रममण्डले निवसतः, कृपालुभिस्तैर्मुनिभिरपत्योत्पादनायेष्टिः कृता। तस्यां च मध्यरात्रि-

कृतायां मंत्रपूतजलपूर्णकलशं, वेदिमध्ये निवेश्य, ते मुनयः सुषुपुः।

तेषु च सुप्तेष्वतितृट्परीतः स भूपालस्तमाश्रमं विवेश, सुप्तांश्च तानृषीन्नैवोत्थापयामास । तच्च कलशजलमपरिमेयमाहात्म्यं मन्त्रपूतं पपौ ।

प्रबुद्धाश्च ऋषयः प्रपच्छुः,—केनैतन्मन्त्रपूतं वारि पीतम् । अत्र हि पीते राज्ञोऽस्य पत्नी महाबलपराक्रमं पुत्रं जनयिष्यति । इत्याकर्ण्य स राजा, 'अजानता मया पीतम्' इत्याह ।

गर्भश्च युवनाश्वस्योदरेऽभवत्, क्रमेण च ववृधे, प्राप्तसमयश्च दक्षिणकुक्षिमवनीपतेर्निर्भिद्य निश्चक्राम । न चासौ राजा ममार ।

'जातो नाम एष कं धास्यति'। इति मुनयः प्रोचुः ।

अथागम्य देवराडब्रवीत्,—'मां धास्यति' इति । ततो मान्धाता नामतोऽभवत् । वक्त्रे चास्य प्रदेशिनी देवराजेन न्यस्ता, तां पपौ । तां चामृतस्राविणीमासाद्य पीत्वा चाह्ना एव व्यवर्धत।

स तु मान्धाता चक्रवर्ती सप्तद्वीपां महीं बुभुजे । भवति चात्र श्लोकः—

यावत् सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥

स मान्धाता शशबिन्दुदुहितरं बिन्दुमतीमुपयेमे । पुरुकुत्समम्बरीषं मुचुकुन्दं च तस्यामपत्यत्रयमुत्पादयामास, पञ्चाशच्च दुहितरस्तस्य नृपतेर्बभूवुः ।

बह्वृचश्च सौभरिर्नाम ऋषिमन्तर्जले द्वादशाब्दं कालमुवास । तत्र चान्तर्जले संमदनामातिबहुप्रजोऽतिप्रमाणो मीनाधिपतिरा-

सीत् । तस्य पुत्रपौत्रदौहित्राः पार्श्वतः पृष्ठतः वक्षःपुच्छशिरसां चोपरि भ्रमन्तस्तेन सहानिशमातिनिर्वृता रेमिरे । स चापि तत्स्पर्शोपचीयमानहर्षप्रकर्षस्तस्य ऋषेः पश्यतः, तैरात्मजपौत्रदौहित्रादिभिः सहानुदिवसं बहुप्रकारं रेमे ।

अथान्तर्जलावस्थितः स सौभरिरेकाग्रतासमाधानमपहायानुदिनं तत्तस्य मत्स्यस्यात्मजपौत्रदौहित्रादिभिः सहातिरमणीयं ललितमवेक्ष्याचिन्तयत्,—अहो, धन्योऽयमीदृशमप्यनभिमतं योन्यन्तरमवाप्य, एभिरात्मजपौत्रादिभिः सह रममाणोऽतीवास्माकं स्पृहामुत्पादयति । वयमप्येवं पुत्रादिभिः सह रंस्यामहे ।

इत्येवमभिसमीक्ष्य स तस्मादन्तर्जलान्निष्क्रम्य निर्वेष्टुकामः कन्यार्थं मान्धातारं राजानमगच्छत् । आगमनश्रवणसमनन्तरं चोत्थाय तेन राज्ञा सम्यगर्घ्यादिना पूजितः कृतासनपरिग्रहः सौभरिरुवाच,—

निर्वेष्टुकामोऽस्मि नरेन्द्र कन्यां प्रयच्छ मे मा प्रणयं विभाङ्क्षीः ।\
न ह्यर्थिनः कार्यवशाभ्युपेताः ककुत्स्थगोत्रे विमुखाः प्रयान्ति ॥\
अन्येऽपि सन्त्येव नृपाः पृथिव्यां क्ष्मापाल येषां तनयाः प्रसूताः ।\
किन्त्वर्थिनामर्थितदानदीक्षाकृतव्रतं श्लाघ्यमिदं कुलं ते ॥\
शतार्धसंख्यास्तव सन्ति कन्यास्तासां ममैकां नृपते प्रयच्छ ।\
यत्प्रार्थनाभंगभयाद्बिभेमि तस्मादहं राजवरातिदुःखात् ॥

इति ऋषिवचनमाकर्ण्य स राजा जराजर्जरितदेहं तमृषिमालोक्य प्रत्याख्यानकातरस्तस्माच्च भगवतः शापतो बिभ्यत् किञ्चिदधोमुखश्चिरं दध्यौ । ऋषिरुवाच,—

नरेन्द्र, कस्मात्समुपैषि चिन्ताम्
अशक्यमुक्तं न मया च किञ्चित् ।
याऽवश्यदेया तनया तथैव
कृतार्थता नो यदि, किं न लब्धम् ॥

अथ तस्य शापभीतः सप्रश्रयमुवाचासौ,—राजा भगवन्नस्मत्कुलस्थितिरियं य एव कन्याया अभिरुचितोऽभिजनवान् वरः तस्मै कन्या प्रदीयते, भगवद्वाञ्छा चास्मन्मनोरथानामप्यगोचरवर्तिनी, कथमप्येषा संजाता । तदेवमवस्थिते, न विद्मः,—किं कुर्मः, इति तन्मया चिन्त्यते ।

इत्यभिहिते तेन भूभुजा मुनिरचिन्तयत्,—अहो, अयमन्योऽस्मत्प्रत्याख्यानोपायः, वृद्धोऽयमनभिमतः स्त्रीणाम्, किमुत कन्यानामित्यमुना संचिन्त्य एवमभिहितम् । एवमस्तु, तथा करिष्यामि ।

इति संचिन्त्य मान्धातारमुवाच,—यद्येवं, तदादिश्यतामस्माकं प्रवेशाय कन्यान्तःपुरवर्षधरः । यदि कन्यैव काचिन्मामभिलषिष्यति, तदाऽहं दारसंग्रहं करिष्यामीति । अन्यथा चेत्, तदलमस्माकमेतेनातीतकालारम्भेण । इत्युक्त्वा विरराम ।

ततश्च मान्धात्रा मुनिशापशङ्कितेन कन्यान्तःपुरवर्षधरः समाज्ञप्तः ।

कन्यान्तःपुरं प्रविशन्नेव भगवानखिलसिद्धगन्धर्वमनुष्येभ्योऽतिशयेन कमनीयं रूपमकरोत् । प्रवेश्य च तमृषिम्, अन्तःपुराध्यक्षस्ताः कन्यकाः प्राह,—भवतीनां जनयिता महाराजः समाज्ञापयति,—'अयमस्मान् ब्रह्मर्षिः कन्यार्थी समभ्यागतो मया चास्य

प्रतिज्ञातं,—यदि अस्मत्कन्यका काचिद्भवन्तं वरयिष्यति, तत् कन्यायाः छन्दे नाहं परिपन्थितां करिष्यामि।

इत्याकर्ण्य सर्वा एव ताः कन्यकाः सानुरागाः, करेणव इव यूथपतिं, तमृषिमहमहमिकया वरयाम्बभूवुरूचुश्च,—

अलं भगिन्योऽहमिमं वृणोमि वृणो मया नैव तवानुरूपः।
ममैव भर्ता विधिनैष सृष्टः सृष्टाहमस्योपशमं प्रयाहि॥
वृतो मयायं प्रथमं मयायं गृहं विशन्नेव विहन्यसे किम्।
मया मयेति क्षितिपात्मजानां तदर्थमत्यर्थकलिर्बभूव॥
यदा तु सर्वाभिरतीवहार्दाद् वृतः स कन्याभिरनिन्द्यकीर्तिः।
तदा स कन्याधिकृतो नृपाय यथावदाचष्ट विनम्रमूर्तिः॥

तदवगमात्, किमेतत्, कथय किं करोमीति, किं मयाभिहितमित्याकुलमतिरनिच्छन्नपि कथमपि राजानुमेने। कृतानुरूपविवाहश्च महर्षिः सकलास्ताः कन्यकाः स्वमाश्रममनयत्।

तत्र चाशेषशिल्पिशिल्पप्रणेतारम्, विधातारमिवान्यं, विश्वकर्माणमाहूय, 'सकलकन्यानामेकैकस्याः, प्रोत्फुल्लपंकजकूजत्कलहंसकारण्डवादिविहंगमाभिरामजलाशयाः सोपवनाः सावकाशाः साधुशय्यासनपरिच्छदाः प्रासादाः क्रियन्ताम्' इत्यादिदेश। तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्यस्त्वष्टा दर्शितवान्।

ततश्च परमर्षिणा सौभरिणाज्ञप्तस्तेषु गृहेष्वनपायी नन्दनाख्यो महानिधिरासांचक्रे। ततोऽनवरतभक्ष्यभोज्यलेह्याद्युपभोगैरागतानुगतभृत्यादीनहर्निशमशेषगृहेषु ताः क्षितीशदुहितरो भोजयामासुः।

एकदा तु दुहितृस्नेहाकृष्टहृदयः स महीपतिरातिदुःखितास्ताः सुखिता वेति विचिन्त्य तस्य महर्षेराश्रममुपेत्य, स्फुरदंशुमालां स्फटिकमयीं प्रासादमालामतिरम्योपवनजलाशयां ददर्श ।

प्रविश्य चैकं प्रासादमात्मजां परिष्वज्य कृतासनपरिग्रहः प्रवृत्तस्नेहाम्बुगर्भनयनोऽब्रवीत्,—अप्यत्र वत्से भवत्याः सुखं उत किञ्चिदसुखम् । अपि ते महर्षिः स्नेहवान् । उत संस्मर्यतेऽस्मद्गृहवासस्य ।

इत्युक्त्वा तत्तनया पितरमाह, तात, अतिशयरमणीयः प्रासादोऽत्र, अतिमनोज्ञमुपवनम्, अतिकलवाक्यविहगाभिरुताः प्रोत्फुल्लपद्माकरा जलाशयाः, मनोऽनुकूलभक्ष्यभोज्यानुलेपनवस्त्रभूषणादिभोग उपभोगः, मृदूनि शयनानि, सर्वसम्पत्समवेतमेतद्गार्हस्थ्यम्, तथापि केन वा जन्मभूमिर्न स्मर्यते । त्वत्प्रसादादिदमशेषमतिशोभनम् ।

किन्त्वेतन्ममैकं दुःखकारणं, यदस्मद्भर्तास्मद्गृहान्न निःसरति, ममैव केवलमतिप्रीत्या समीपवर्ती, नान्यासां मद्भगिनीनामेवं च मम सहोदरा दुखिताः इत्येवातिदुःखकारणम् ।

इत्युक्तस्तया द्वितीयं प्रासादमुपेत्य, स्वतनयां परिष्वज्योपविष्टस्तथैव पृष्टवान् । तयापि तथैव सर्वमेतत्प्रासादाद्युपभोगसुखमाख्यातम् ।

ममैव केवलं पार्श्ववर्ती, नान्यासामस्मद्भगिनीनामित्येवमादि स्मृत्वा समस्तप्रासादेषु राजा प्रविवेश, तनयास्तथैवापृच्छत् । ताभिश्च तथैवाभिहितः परितोषविस्मयानिर्भराविवशहृदयो भगवन्तं

सौभरिमेकान्तावस्थितमुपेत्य कृतपूजोऽब्रवीत्, दृष्टस्ते, भगवन्, सुमहानेष सिद्धिप्रभावः, नैवंविधमन्यस्य कस्यचिदस्माभिर्विभूतिविलसितमुपलक्षितम्। कियदेतद्भगवंस्तपसः फलम्। इत्यभिपूज्य तमृषिं, तत्रैव तेन ऋषिवर्येण सह कञ्चित्कालमभिमतोपभोगं बुभुजे, स्वपुरं च जगाम।

कालेन गच्छता तस्य राजतनयासु तासु पुत्रशतं सार्धमभवत्। तदनुदिनानुरूढस्नेहः स तत्रातीवममताकृष्टहृदयोऽभवत्, अप्येतेऽस्मत्पुत्राः कलभाषिणः पद्भ्यां गच्छेयुः। अप्येते यौवनिनो भवेयुः। अपि कृतदारानेतान् पश्येयम्। अप्येतेषां पुत्रा भवेयुः। अप्येतत्पुत्रान् पुत्रसमन्वितान् पश्येयम्। एवमादिमनोरथमनुदिनसमृद्धमवेत्यैतत्संचिन्तयामास, अहो मे मोहस्यातिविस्तारः।

मनोरथानां न समाप्तिरस्ति वर्षायुतेनापि तथाब्दलक्षैः।
पूर्णेषु पूर्वेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम्॥
पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः।
दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा॥
द्रक्ष्यामि तेषामपि चेत्प्रसूतिं मनोरथो मे भविता ततोन्यः।
पूर्णेपि तत्राप्यपरस्य जन्म निवार्यते केन मनोरथस्य॥
आ मृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमात्मसंगि॥
स मे समाधिर्जलवासमित्रमत्स्यस्य संगात्सहसैव नष्टः।
परिग्रहः संगकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः॥
दुःखं यदैवैकशरीरजन्म शतार्धसंख्यं तदिदं प्रसूतम्।

परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥
सुतात्मजैस्तत्तनयैश्च भूयो भूयश्च तेषां च परिग्रहेण ।
विस्तारमेष्यत्यतिदुःखहेतुः परिग्रहो वै ममतानिधानम्
चीर्णं तपो यत्तु जलाश्रयेण तस्यर्द्धिरेषा तपसोऽन्तरायः ।
मत्स्यस्य संगादभवच्च यो मे सुतादिरागो मुषितोऽस्मि तेन ॥
निःसंगता मुक्तिपदं यतीनां संगादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधः संगेन योगी किमुताल्पसिद्धिः ॥
अहं चरिष्यामि तथात्मनोऽर्थे परिग्रहग्राहगृहीतबुद्धिः ।
यथा न भूयः परिहीणदोषो जनस्य दुःखैर्भवितास्मि दुःखी ॥
सर्वस्य धातारमचिन्त्यरूपमणोरणीयांसमतिप्रमाणम् ।
सितासितं चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुम् ॥
तस्मिन्नशेषौजसि सर्वरूपिण्यव्यक्तविस्पष्टतनावनन्ते ।
ममाचलं चित्तमपेतदोषं सदास्तु विष्णावभवाय भूयः ॥
समस्तभूतादमलादनन्तात्सर्वेश्वरादन्यदनादिमध्यात् ।
यस्मान्न किञ्चित्तमहं गुरूणां परं गुरुं संश्रयमेमि विष्णुम् ॥

इत्यात्मानमात्मनैवाभिधायासौ सौभरिरपहाय पुत्रगृहासनपरिबर्हादिकमशेषमर्थजातं, सकलभार्यासमवेतो वनं प्रविवेश । तत्राप्यनुदिनं वैखानसनिष्पाद्यमशेषक्रियाकलापं निष्पाद्य क्षपितसकलपापः परिपक्कमनोवत्तिरात्मन्यग्नीनारोप्य भिक्षुरभवत् ।

व्यासः—विष्णुपुराणम् ।

---

**कद्रुविनतयोः ।**

ऋषिवर्यस्य कश्यपस्य भार्ये प्रजापतिसुते भगिन्यावभूतां

रूपेण समुपेते पुरा देवयुग आस्ताम्। कदाचित्कश्यपो महाप्रभावस्ताभ्यां वरं ददौ। कद्रूस्तुल्यवर्चसो नागान्सहस्रं पुत्रान्वव्रे। विनता च तेजसा वपुषा विक्रमेण च कद्रूपुत्राधिकौ द्वावेव वव्रे। "एवमस्तु" इति कश्यपस्ताभ्यामुभाभ्यामाह। कालेन महता कद्रूरण्डानां शतीर्दश जनयामास। द्वे अण्डे च विनता। ततः पंचशते काले कद्रुपुत्रा अण्डेभ्यो विनिर्गताः। विनतायास्त्वण्डाभ्यां मिथुनं न व्यदृश्यत। पुत्रार्थिनी व्रीडिता साण्डमेकं बिभेद। तत्र चाध्यर्धकायसंपन्नं पुत्रमपश्यत्। स पुत्रश्च क्रोधसंरब्ध एनां शशाप—"मातः, योऽहं लोभपरीतया त्वया शरीरेणासमग्रेणैवं कृतस्तस्माद्दासी भविष्यसि। अपि च यया सह विस्पर्धसे तस्या एव दासी पञ्चवर्षशतानि भविष्यसि। मातः, यद्येनमपि तपस्विनं त्वं मामिवाण्डाविभेदनाद्व्यंगं वा न करिष्यसि, एष च सुतो दासीत्वान्मोचयिष्यति। त्वया धीरया विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परोऽस्य जन्मकालः प्रतिपालयितव्यः"। एवं विनतां शप्त्वा ततः पुत्रोऽन्तरिक्षगोऽभवत्। आदित्यरथं सोऽद्याप्यध्यास्ते। तस्य सारथ्यं समकल्प्यत।

एकदा समायाते ते भगिन्या उच्चैःश्रवसमपश्यताम्। स तु दृष्टमात्रः स्वस्थानं जगाम। तमधिकृत्य कद्रूर्विनतामब्रवीत्—

'उच्चैःश्रवा हि किंवर्णो भद्रे प्रब्रूहि मा चिरम्।'

विनतोवाच—

'श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे।
ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे॥'

कद्रूरुवाच—

'कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते ।
एहि सार्धं मया दीव्य दासीभावय भामिनि ॥'

एवं ते दासीभावाय मिथः समयं कृत्वा "श्वो द्रक्ष्यावः" इति स्वगृहानेव जग्मतुः । ततो जिह्मं चिकीर्षन्ती कद्रूस्तदा पुत्रसहस्रमाज्ञापयामास—"पुत्राः, यूयमञ्जनप्रभा बाला भूत्वा क्षिप्रं हयमाविशध्वं यथाहं दासी न स्याम्" इति । ये तस्या वाक्यं नावपद्यन्त तान्भुजंगमान्सा शशाप—

सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति ।
जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः"

ततो रजन्यां व्युष्टायां प्रभातेऽभ्युदिते रवौ द्वे अपि भगिन्यावमर्षिते सुसंरब्धे दास्ये कृतपणे तदा तुरंगमुच्चैःश्रवसमान्तिकाद्द्रष्टुं जग्मतुः । नागाश्चापि "माता संप्राप्तमनोरथा निःस्नेहा वै दहेत्, प्रसन्ना तु शापादस्मान्मोचयेदिति तद्वचः कर्तव्यम्" इति संविदं कृत्वा गत्वा तुरंगमस्य पुच्छं कृष्णमकार्षुः । पणिते सपत्न्यौ महोदधेः परं पारं गत्वा तुरंगाभ्याशे न्यपतताम् । तत्र ते उभे हयं शशांककिरणप्रख्यकालवालमपश्यताम् । कद्रूश्च विनतां दास्ये न्ययोजयत् ।

आगते काले विना मात्राण्डं विदार्य गरुडोऽजायत । सोऽपि जातमात्रो विनतां परित्यज्य क्षुधितो विधात्रा विहितभस्य भोज्यमादास्यन्समाविशत् । अथ केनापि दीर्घेण कालेन महासत्त्वबलोपेतो गरुडो मातुरन्तिकमगच्छत् । ततः कद्रूनो-

गानामालयं जिगमिषन्ती दासीभूतां विनतामाह–" विनते, मां तत्र नय " इति । ततः सुपर्णमाता सर्पमातरं मातुर्वचनचोदितो गरुडोऽपि पन्नगानवहत् । सुपर्णेनोह्यमानास्ते पन्नगा उद्दिष्टं द्वीपं जग्मुः । तत्र गत्वा ते सुपर्णमाहुः–" त्वं पक्षी भूत्वा बहून्रम्यान्देशान्पश्यसि । अस्मानप्यपरं द्वीपं वह" इति । ततो गरुड एकान्ते मातरं विनतामपृच्छत्–" मातः, किं कारणं मया सर्पभाषितं कर्तव्यम् " इति विनतोवाच–" पुत्रक सर्पैरुपधिना कृतं वितथं पणमास्थायाहं दुर्योगात्सपत्न्या दासीभूतास्मि " । तस्मिन्कारणे कथिते तेन दुखेन दुखितः सुपर्णः सर्पानुवाच–

" किमाहृत्य विदित्वा वा किं वा कृत्वेह पौरुषम् ।
दास्याद्वो विप्रमुच्येय तथ्यं वदत लेलिहाः ॥ "

श्रुत्वा सर्पा अब्रुवन्–"सुपर्ण, आहरामृतम् । ततो दास्यात्तव मोक्षो भविष्यति " । महाबलोऽसौ स्वर्गलोकादमृतमाहरत् । कुशसंस्तरे च तत्स्थापयित्वा सर्पानाह–" भोः सर्पाः स्नाता मंगलसंयुक्ता एतत्प्राश्नीत । यथोक्तं भवतां वचो मे प्रतिपादितम् । अद्यप्रभृति मम मातेयमदास्यस्तु " इति । तच्छ्रुत्वा सर्पाः स्नातुं गताः । एतस्मिन्नन्तरे शक्रोऽप्यमृतमाक्षिप्य त्रिदिवं गतः । स्नाता यावदमृतं न पश्यन्ति तावत्ते दर्भांल्लिलिहुः । तेन कर्मणा सर्पाणां जिह्वा द्विधा कृताः । अमृतस्पर्शाद्दर्भाः पवित्रिणोऽभवन् । ततः सुपर्णः परमप्रहर्षवान्विहृत्य कानने भुजंगभक्षो मातरमनन्दयत् ।

व्यासः––विष्णुपुराणं ।

## सहगमनसमये देव्या यशोमत्या हर्षवर्धनं प्रति उपदेशकथनं ।

वत्स, नासि मे विप्रियो निर्गुणो वा परित्यागार्हो वास्तन्ये-नैव सह त्वया पीतं मे हृदयं आर्समस्तु समये प्रभूतप्रभुप्रसादा-न्तरितं त्वान्न पश्यति दृष्टिः । अपि च पुत्रक पुरुषान्तरविलो-कनव्यसानेनी राज्योपकरणमकरुणा वा नास्मि लक्ष्मीः क्षमा वा । कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता किन्न-स्मरासि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिण इव के-सरिणीं गृहिणीम् । वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात् । एवंविधेन ते पित्रा भरतभगीरथनाभागप्रतिमेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः, आसेवितः सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बू-नदघटाभिषेकः सिरसा, लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धस-त्कारलाभो ललाटेन, पीतौ युष्माद्भिर्धैरपत्यैरमित्रकलत्रबन्दीवृन्द-विधूयमानचामरमरुच्चलचीनांशुकधरौ पयोधरौ, सपत्नीनां शि-रःसु निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्चि-तचरणयुगलं, एवं कृतार्थसर्वावयवा किमपरमपेक्षे क्षीणपुण्या । मर्तुमविधवैव वाञ्छामि । दग्धे भर्तर्यार्यपुत्रविरहिता रतिरिव निरर्थकान् प्रलापान् न च शक्नोमि कर्तुम् । पितुश्च ते पादधू-लिरिव प्रथमं गगनगमनमावेदयन्ती बहुमता भविष्यामि शूरानु-रागिणीनां सुरांगनानां, प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः । मरणाच्च जीवितमेवास्मिन् समये साहसं

अतिशीतलः पतिशोकानलाद्‌क्षयस्नेहेन्धनादस्मादनलः, कैलासकल्पे च प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते ।

अपि च मां जीवन्तीमपि नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र पुत्रराज्यसुखानि । दुःखदग्धानाञ्च भूतिः अमंगला चाप्रशस्ता च निरुपयोगा च भवति । वत्स , विश्वस्तानां यशसा अवस्थातुमिच्छामि लोके न वपुषा । तदहमेव त्वां तावत् तात , प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि इत्युक्त्वा पादयोरपतत् । स तु ससम्भ्रममपनीय चरणयुगलमवनमिततनुरुभयकरविधृतवपुषमवनिगतशिरसमुदनमयत् मातरम् । दुर्निवारताञ्च शुचः समवधार्य, कुलयोषिदुचिताञ्च श्रेयसीं तामेव मन्यमानः क्रियां, कृतनिश्चयाञ्च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत् ।

अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम् । देव्यपि यशोमती समाघ्राय शिरसि निर्गत्य च चरणाभ्यामेवान्तःपुरात् पौराक्रन्दप्रातिशब्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ । तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपंकजपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तामिव मूर्तिरैन्दवी चित्रभानुं प्राविशत् । इतरोऽपि मातृमरणविह्वलोबन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात् ।

अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं तारकराजमिवास्तमभिलषन्तं जनयितारम् । असह्यशोकोद्वेगाभिभूतश्च

त्याजितः स्नेहेन धैर्यमाश्लिष्य सकलदुर्मदमहीपालमौलिलालि-तौ पादपद्मौ, अन्तस्तापात् मुखचन्द्रमिव द्रवीभवन्तं, दन्तज्योत्स्नाजालमिव जलतामापाद्यमानं, लोचनलावण्यमिव विलीयमानं, मुखसुधारसमिव स्यन्दमानमच्छाच्छमश्रुस्रोतसां सन्तानं, महामेघमयविलोचन इव वर्षन्नितरवद्विमुक्तरावश्चिरं रुरोद ।

राजा तु तमुपरिरुध्यमानदृष्टिरपि अविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत् । पुत्र, नार्हस्येवं भवितुं । भवाद्विधा न मुह्यन्ति महासत्वाः । महासत्वता हि प्रथममवलम्बनं लोकस्य पश्चाद्राजबीजिता । सत्ववतां चाग्रणीरासि । सर्वातिशयाश्रयः क्क भवान् क्क वैक्लव्यम् ।

तथा हि कुलप्रदीपोऽसीति दिनकरसदृशतेजसस्ते लघूकरणमिव, पुरुषसिंहोसीति पटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव, क्षितिरियं तवेति लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तमिव, गृह्यतां श्रीरिति स्वयमेव श्रिया गृहीतस्य विपरीतमिव, अध्यास्यतामयं लोक इति उभयलोकविजिगीषोरपुष्कलमिव, स्वीक्रियतां कोषागारमिति शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव, आत्मीक्रियतां राजकमिति गुरुगुणगणात्मीकृतजगतो गतार्थमिव, उह्यतां राज्यभार इति भुवनत्रयभारोचितस्यानुचितनियोग इव, प्रजाः परिरक्ष्यन्तामिति दीर्घदोर्दण्डार्गलितदिङ्मुखस्यानुवाद इव, परिजनः पाल्यतामिति लोकपालोपमस्यानुषङ्गिकमिव, शस्त्राभ्यासः कार्य इति धनुर्गुणकिणकलंककालीकृतप्रकोष्ठस्य किमादिश्यते, निग्राह्यताञ्चापलजातमिति नूतनतरवय-

सि निगृहीतेन्द्रियस्य निरवकाशेव मे वाणी, निरवशेषतां शत्रवो नेया इति सहजस्य तव तेजस इव केयञ्चिन्ता इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील राजसिंहः लोचने ।

## राजस्वर्गगमनादूर्ध्वं प्रजावस्थान्तरस्य ।

राजवल्लभा भृत्याः सुहृदः सचिवास्तु तस्मिन्नेवाहनि निर्गत्य प्रियं पुत्रदारं उत्सृज्य उद्बाष्पैः वार्यमाणा बन्धुभिः अपि बहुनृपगुणगणहृतहृदयाः, केचिदात्मानं भृगुषु बभंजुः, केचित्तत्रैव तीर्थेषु तस्थुः, केचिदनशनैरास्तीर्णतृणकुथाः क्वथन्मनसः शुचमसमामशमयन्, केचित् शलभा इव वैश्वानरं शोकावेशविवशा विविशुः, केचिद्दारुणदुःखदहनदह्यमानविग्रहा गृहीतवाचस्तुषारशिखरिणं शरणमुपययुः, केचिद्विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारासिच्यमानतनवः पल्लवशयनशायिनः सन्तापमशमयन्, केचित् संन्निहितानपि विषयानुत्सृज्य सेवाविमुखाः परिच्छिन्नैः पिण्डकैरटवीभुवः शून्या जगृहुः, केचित् पवनाशना धर्मधनाः धमद्धमनयो मुनयो बभूवुः, केचित् गृहीतकाषायाः कापिलं मतमधिजगिरे गिरिषु, केचिदाच्छोटितचूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे, अपरे परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागमुज्ज्वली चक्रुः, अन्ये तपोवनहरिणजिह्वातलोल्लिह्यमानमूर्तयो जरां जग्मुः । अपरे पुनः पुनः पाणिपल्लवप्रमृष्टैरातम्ररागैः नयनपुटैः कमण्डलुभिश्च वारि वहन्तो गृहीतव्रता महीतले मुण्डा विचेरुः ।

देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इ-

ति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजगा इति, निलयन्निरय इति, बन्धून् बन्धनमिति, जीवितं अयश इति, देहं द्रोह इति, कल्यतां कलंक इति, आयुरपुण्यफलमिति, आहारं विषमिति, विषमममृतमिति, चन्दनन्दहन इति, कामं क्रकच इति, हृदयस्फुटनमभ्युदय इति मन्यमानं सर्वासु क्रियासु विमुखं पितृपितामहपरिग्रहागताश्चिरंतनाः कुलपुत्राः वंशक्रमाहितगौरवाश्च ग्राह्यगिरो गुरवः, श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः, अधिगतनिखिलाजिनवचनाविदिताविपरीतभवस्थितयो धर्मदेशनापटीयांसः पाराशरिणः, श्रुताभिजनशीलशालिनो मूर्द्धाभिषिक्ताश्च मान्या राजानो, यथावदधिगताध्यात्मतन्त्राश्च संस्तुता मस्करिणः, समदुःखसुखाश्च समाश्रिताः सनाभयः, चित्तज्ञाश्च प्रधानसचिवाः निष्कारणबान्धवाश्च मुनयः संसारासारकथनकुशलाश्च ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन् । अस्वतन्त्रीकृतश्च तैर्मनसापि नालभत शोकानुप्रवणमनुचरितुं अनुनीयमानश्च कथं कथमपि आहारादिकासु क्रियास्वाभिमुख्यमभजत । भ्रातृगतचित्तश्चाचिन्तयत् अपि नाम तातस्य मरणं महाप्रलयसदृशमिदमुपश्रुत्यार्यो बाष्पजलस्नातो न गृह्णीयाद्वल्कले, नाश्रयेद्वा राजर्षिराश्रमपदं, न विशेद्वा पुरुषसिंहो गिरिगुहां, अश्रुसलिलनिर्भरभरितनयनयुगलः पश्येद्वानाथां पृथिवीं प्रथमव्यसनविषमविषविह्वलः स्मरेद्वात्मानं पुरुषोत्तमः, अनित्यतया जनितवैराग्यो वा न निराकुर्यात् उपसर्पन्तीं राजलक्ष्मीं, दारुणदुःखदहनप्रज्वलितदेहो वा प्रतिपद्येताभिषेकं, इहागतो वा

राजभिरभिधीयमानो न पराचीनमाचरेत् । अतिपितृपक्षपाती स्वस्वार्यः सर्वदा तातश्लाघायामभिधत्ते तात हर्ष, कस्यचिदभूत् भविष्यति वा पुनर्वपुः काञ्चनतालतरुप्रांशुप्रमाणमिदं, इदञ्च दिवसकरप्रीत्या दिवसमुन्मुखं विकसितं मुखकमलं एतौ च वज्रस्तंभभासुरौ भुजकाण्डौ एते च हसितमदालसहलधरविभ्रमा विलासाः, कोऽन्यो मानी विक्रान्तो वदान्यो वा एतानि चान्यानि चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुरागमनमुदीक्षमाणः कथं कथमप्यतिष्ठत् । बाणः—हर्षचरितम् ।

---

## कंदर्पकेतुं प्रति मकरंदस्योपदेशवादः ।

अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवेशः कन्दर्पसायकप्रहारपरवशं कन्दर्पकेतुमुवाच । सखे किमिदमसांप्रतमसाधुजनोचितमध्वानमाश्रितोऽसि तवैतच्चरितमालोक्य वितर्कदोलासु निवसन्ति सन्तः खलाः पुनस्तदनिष्टमनुचितमेवावधारयन्त्यनिष्टोद्भावनरसोत्तरं हि खलहृदयं को नामास्य तत्वनिरूपणे समर्थः ।

तथा हि भीमोऽपि न बकद्वेष्याश्रयाशोऽपि मातरिश्वातिकटुरपि महारसः सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि न कटुत्वं जहाति तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च पादपराग इवावधूतो मूर्धानं कषाययति विषतरुप्रसव इव यथा यथानुभूयते तथा तथा मोहमेव दृढयति न वारिविरहोऽस्य जायते नीचदेशस्येव निदाघदिवस इव बहुमत्स-

रो वहति तापं सुमनसामन्धकार इव दोषानुबन्धचतुरो विश्वकर्मा-
वलोपनोद्यतश्च विरूपाक्षोपि चक्रधरः शक्राश्व इवोच्चैःश्रवा
नदेशजप्रशंसी च शरस्येव विभिन्नस्यापि सतः स्नेहं दर्शयतो-
ऽपि तक्राट इव हृदयं विलोडयति यक्षबलिरिवात्मघोषमुखरो
मण्डलभ्रमणाकथकश्च मत्तमातङ्ग इव स्ववशालोलमुखोऽधरीकृ-
तदानश्च वृषभ इव सुरभियानविकलः कामीव गोत्रस्खलनवि-
धुरो वामाध्वानुरक्तश्चाजीर्णविकार इव कलेवरे वचसि मन्दिमा-
नमावहति वञ्चक इव कटपले रक्तो विभावरीरक्तश्च परेत इव
बन्धुतापदर्शनः परशुरिव भद्रश्रियमपि खण्डयति कुद्दाल इव
दलितगोत्रः क्षमाभाजः प्राणिनो निकृन्तति रतकील इव जघन्य-
कर्मलग्नो ह्रेपयति साधून् दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि
यवसं सतं नानुमोदते । अबीजादेव जायन्तेऽकाण्डादेव प्ररोहन्ति
खलव्यसनांकुरा दुरुच्छेदा भवन्त्यसतां हि हृदि प्रविष्टो दोषलवः
करालायते । सतां तु हृदि न विशत्येव यदि कदाचिद्विशति
पारद इव क्षणमात्रमपि नावतिष्ठते साधवो मृगा इव विनोदवि-
न्दोः श्रवणवशगाः सुखं जनाः शरत्समया इव भवादृशा मित्र-
स्य हृदयं हरन्ति न च सचेतना विसदृशमुपदिशन्त्यचेतनाना-
मपि मैत्री समुचितपक्षे निक्षिप्ता । तथा हि माधुर्यशैत्यशुचित्वस-
न्तापशान्तिभिः पयः पय इवेति मित्रतामुपगतस्य दुग्धस्य त-
त्संगमाद्वर्धितस्य क्वाथेन ममैव पुरो युक्तः क्षय इति विचिन्त्येव
वारिणापि क्षीयते । तदिदमसाम्प्रतमाचिरतं सखे गृहाण साधु-
जनोचितमध्वानं साधवो हि दिङ्मोहात् परमुत्पथप्रवृत्ता भव-

न्तीत्यादि वदति तस्मिन् कथमपि स्मरशरनिकरप्रहारपरवशः परिमिताक्षरमुवाच कन्दर्पकेतुः । वयस्य दितिरिव शतमन्युसमाकुला भवति मनोवृत्तिः । नायमुपदेशकालः पच्यन्त इवांगानि क्वथ्यन्त इवेन्द्रियाणि भिद्यन्त इव मर्माणि निःसरन्तीव प्राणा उन्मूल्यन्त इव विवेका नष्टा स्मृतिः । तदधुना यदि त्वं सहपांशुक्रीडनसमदुःखसुखोऽसि तदा मामनुगच्छेत्युक्त्वा परिजनालक्षितस्तेन सह नगरान्निर्जगाम । **सुबन्धुः—वासवदत्ता ।**

---

## राजानं प्रति सोमशर्मसंवादः ।

कदाचिद्वामदेवाशिष्यः सोमशर्मनामा कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत । देव रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि । स्थविरे, का त्वमेतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमयासेन भ्रमसीति । वृद्धयाप्यभाषि । मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद्द्वीपागतो मगधनाथमन्त्रिसंभवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संमानीतोऽभूत् । कालक्रमेण नतांगी गर्भिणी जाता । ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय चपललोचनया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे । कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत् । गर्भभरालसां तां ललनां धात्रीभावेन

कल्पिताहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम्। सुहृज्जनवृतो रत्नोद्भवस्तत्र निमग्नो वा केनाप्युपायेन तीरमगमद्वा न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्तास्मिन्नटवीमध्ये सुतमसूत। प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोप्यनायीति। एतस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत। तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत्। अहं समीपलतागुल्मे प्रविश्य परीक्षमाणोतिष्ठम्। निपतितं बालकं पल्लवकवलमिवाददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत्। भयाकुलेन दन्तावलेन झटिति वियति पात्यमानो बालको न्यपतत्। चिरायुष्यतयासन्नोन्नततरुशाखासमासीनेन वानरेण केनचित्पक्वफलमनीषया परिगृह्य फलेतरतया विततस्कंधमूले निक्षिप्तोभूत्। सोपि मर्कटः क्वचिदगात्। बालकेन सत्त्वसंपन्नतया सकलक्लेशसहेनाभावि। केसरिणा करिणं निहत्य कुत्रचिदगामि। लतागृहान्निर्गतोहमपि तेजःपुञ्जं बालकं शनैरवनिरुहादवतार्य वनान्तरे वनितामन्विष्याविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मीति। सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं बिभ्राणो राजा रत्नोद्भवः कथमभवदिति चिंतयंस्तन्नंदनं पुष्पोद्भवनामधेयं विधाय तदुदन्तं व्याख्याय सुश्रुताय विषादसंतोषावनुभवंस्तदनुजतनयं समर्पितवान्।

अन्येद्युः कंचन बालकमुरसि दधती वसुमती वल्लभमभिगता तेन कुत्रत्योऽयमिति पृष्टा समभाषत । राजन्, अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारकमेकं संस्थाप्य निद्रामुद्रितां मां निबोध्य विनीताब्रवीत् । देवि, त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकान्ताहं तारावली नाम नन्दिनी मणिभद्रस्य यक्षेश्वरानुमत्या मदात्मजमेतं भवत्तनुजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्याकरणायानीतवत्यस्मि । त्वमेनं मनोजसंनिभं वर्धयेति । विस्मयविकसितनयनया मया सविनयं सत्कृता स्वक्षी यक्षी साप्यदृश्यतामयासीदिति । कामपालस्य यक्षकन्यासंगमे विस्मयमानमानसो राजहंसो रंजितमित्रं सुमित्रमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्त्तादिकं व्याख्यायादात् ।

दण्डी—दशकुमारचरितं ।

## Notes and Meanings.

सकलराजलक्षणोपेतः— Endued with all the auspicious marks of royalty. राज्ञः लक्षणानि= राजलक्षणानि, सकलानि राजलक्षणानि तैरुपेतः । राजलक्षणानि च सामुद्रिकोक्तानि, पुंसः पाणिपादतलादिषु स्थितानि रेखाकाराणि पद्मशंखचक्रध्वजांकुशच्छत्रतोरणादिकानि चिह्नानि । उक्तं च " यस्य पादतले पद्मं चक्रं वाप्यथ तोरणं । अंकुशं कुलिशं वापि स राजा भवति ध्रुवं " ।

सार्वभौम *m.* An universal monarch. सर्वस्याः भूमेः ईश्वरः इति सार्वभौमः ।

अमात्यगणपरिवृतस्य –Surrounded by his ministers. अमा ( अव्ययं ) समीपे तिष्ठंतीति अमात्याः तेषां गणाः समूहाः तैः परिवृतः तस्य ।

परिषद् *f*. An assembly composed of learned men. परिषीदंति अस्यामिति ।

वर्तनार्थिन् *adj*. One wishing to secure maintenance वर्तयति जीविकासंपादनं करोति अनेन इति वर्तनं वृत्ति जीवनोपायं इति यावत् अर्थयते याचते इति वेतनाभिलाषी ।

दौवारिक *m* A warder. द्वारपालः।

राजपुत्र *m*. A Rajputa.

प्रतीहारी=सिंहद्वारपालः ।

वीरवर *m*. A proper name. वीरेषु शूरेषु वरः श्रेष्ठः ।

किं जीवनं कर्तव्यं तद्वद–Say what stipend dost thou demand, said the king.

सुवर्णशतपंचत्रयं–Fifteen hundred pieces of gold a day. सुवर्णानां षोडषमाषपरिमितानां स्वर्णमुद्राणां शतानि तेषां पंचावृत्तं त्रयं ।

अत्र=अस्मिन् राजसंसारे ।

केषामपि एतावज्जीवनं न विद्यते– But no one receives such an amount of stipend.

सांधिविग्रहिक *m*. A minister. संधिः साम च विग्रहो युद्धं च संधिविग्रहौ तौ जानातीति, सन्धिविग्रहादितत्वज्ञः मंत्रीति यावत् । ( who decides upon peace and war. )

देव, एतेन मा कातरो भव— My lord, you need not shrink from this matter. .

बहुलधनमपि विनष्टं न भविष्यति– And that will not bring you much loss of wealth.

वर्तनधनस्यार्धं &c. Then the king again called back वीरवर who being placed in the service, used to give away half of his pay to Brâhmanas, one-forth to the blind and lame and to maintain himself by the one-fourth that still remained.

करुणस्वरेण रोदिति— Was heard to lament piteously.

तस्य रोदनव्यापारस्य तत्वं कारणादिकं ।

अनुपलक्षित *adj*. Unperceived.

यत्नेन—Affectionately.

तच्छ्रुत्वा&c. On hearing this, वीरवर said oh mother! pray tell me the means by which thou the divine goddess mayst stay forever, and the king may live long, so that I may act accordingly.

मयाशक्यमपि कर्तव्यं—I will do it though hard to perform

द्वात्रिंशल्लक्षणोपेतं = द्वात्रिंशत्संख्याकैः शास्त्रोक्तैः शुभलक्षणैरन्वितं ।

शोभनं=उपस्थितविपन्निवारणरूपं मंगलं ।

केशाकर्षणशिरश्छेदं &c. If the son also wilfully submit to his hair being pulled and head severed; then and not till then.

परलोके निस्तारः कथं भविष्यति—How do you hope to be saved in next world?

धन्योहं &c. Glorious, indeed am I become! who am the instrument of procuring long life to the king and saving his dominions by the sacrifice of my life.

अभिनंदति=प्रीत्या अनुमोदते ।

दीर्घायुष्यकामः=चिरजीवनार्थी ।

विपत्तिक्षयहेतवे—To avert the evil impending over the king.

सात्विकत्वमधिगम्य—Impressed with the disinterested devotion. अतिविशुद्धं चित्तभावं ।

उल्लसित *adj.* Up-lifted.

मदायुःशेषेणापि—In exchange for the remaining portion of my life's duration.

निगादितवान्—Related.

बहुतरहयहस्तिधनजनमणिरत्नानि दत्वा—Having presented him with great many elephants, horses, attendants, and also with immense riches, gems and jewels.

निघ्न *m.* Name of a king of the यदु family.

प्रसेन *m.* Name of निघ्न's son.

सत्राजित *m.* Name of the son of निघ्न.

अंभोधिस्तीरसंश्रयः— Took up his abode in the sea-coast.

मनस्कतया—Intently.

यथैव व्योम्नि &c. Now, not withstanding your personal appearance befor me, I see in you the same globe of fire that crests the welkin.

अत्र न कांचिद् &c. Lord! there you have shown me no mark of favour that I may see you distinctly. विशेषं प्रभेदं, उपलक्षयामि पश्यामि । अत एव विशेषं उपलक्षयामि तथा कुरु इति भावः ।

आताम्रोज्ज्वलवपुषं—आताम्रं ईषद्रक्तं उज्ज्वलं प्रदीप्तं च वपुः शरीरं यस्य सः तं तथोक्तं ।

अस्मत्तः अभिमतं वरं वृणीष्व—Do

you ask from me a boon that you desire.

धिष्ण्यं–स्थानम् ।

अमलमणिरत्नसनाथकण्ठतया–अमलेन उज्ज्वलेन मणिरत्नेन मणिश्रेष्ठेन सनाथकण्ठतया अलंकृतकण्ठतया ; Satrâjita, on the other hand, on wearing the best of gems over his neck, illumined, like the sun &c.

उद्भासयन्–आलोकयन् ।

जनपदोऽत्र जनसमूहवाचकः ।

पुरुषोत्तमं=श्रीकृष्णं ।

विश्रब्धाः=निःशंकाः ।

आत्मनिवेशने स्वगृहे चक्रे रक्षितवान् ।

प्रतिदिनं &c. This matchless gem produced every day eight Bháras of gold.

भारप्रमाणं यथा ; ५ गुंजाः = १ माषः ; १६ माषाः = १ कर्षः ; ४ कर्षाः = १ पलं ; १०० पलानि = १ तुला ; २० तुलाः = १ भारः

तत्प्रभावाच्च &c. Through its magical influence, the whole kingdom became free from draught, serpents, conflagration, thieves, famines and other dangers.

उग्रसेनः–कंसराजपिता यदुवंशीयो राजा ।

लिप्सांचक्रे=ग्रहीतुं लोभमकरोत् ।

गोत्रभेदभयात्=ज्ञातिविरोधाशंकया- The fear of family feud restrained him from doing so.

अवगतरत्नलोभः–अवगतः ज्ञातः रत्ने स्यमंतकमणौ लोभः कृष्णस्य आकांक्षा येन सः ।

तच्च शुचिना &c. When worn by a clean man it produces immense quantly of gold and many other blessings, if otherwise, it indubitably proves fatal to any one who wears it.

कण्ठासक्तेन स्यमंतकेन उपलक्षितः। उपलक्षणे तृतीया ।

ऋक्षाधिपतिना=भल्लूकराजेन । क्रीडनं=क्रीडासाधम् ।

नूनं=निश्चितं, एतत्=प्रसेनवधरूपं, अस्य=कृष्णस्य ।

कर्णाकर्णि=कर्णे कर्णे । कर्ण्याकर्ण्यां =कर्णपरंपरया इत्यर्थः । All the Yàdavas began to whisper into each others ears &c.

सिंहपददर्शनकृतपरिशुद्धिः — By showing the prints of the lion's paws to all the people, he exculpated himself from the blame &c. सिंहप-

दर्शनेन कृता परिशुद्धिः आत्मनः कलंकक्षालनं येन सः, सिंहेनैव प्रसेनो हतः न कृष्णेन इति अधुना जनपदेन ज्ञातत्वात् ।

अल्पे भूमिभागे—कियद्दूरे ।

तद्रत्नगौरवात्—तस्मिन् रत्ने स्यमंतकमणौ यत् गौरवं बहुमानबुद्धिः तस्मात् ।

धात्र्याः=उपमातुः ।

उल्लापयंत्याः—आकांक्षाजनकं वचनं उल्लापनं, तत् कुर्वंत्याः सांत्वयंत्याः इत्यर्थः ।

लब्धस्यमंतकोदंतः—लब्धः ज्ञातः स्यमंतकस्य उदंतः वार्ता येन सः ।

जाज्वल्यमानं—अतिप्रकाशमानं स्यमंतकाभिलाषसूचकं चक्षुर्यस्य सः तं; सस्पृहदृष्टिपातेन स्यमंतकलाभेच्छां सूचयंतमित्यर्थः ।

तन्निष्क्रान्तिमुदीक्षमाणाः—बिलात्तस्य निर्गमनमपेक्षमाणाः ।

व्याक्षेपः—विलंबः ।

कृताध्यवसायाः—कृतनिश्चयाः ।

उपरतक्रियाकलापं—प्रेतकृत्यं, श्राद्धादिकं ।

अतिगुरुपुरुषभिद्यमानस्य-अतिगुरुणा असीमबलशालिना पुरुषेण कृष्णेन भिद्यमानस्य आहन्यमानस्य ।

अतिनिष्ठुरैः अतिकठिनैः प्रहारैः आघातैः पीडिताः व्यथिताः अखिला अवयवाः सर्वांगानि यस्य सः तस्य तथोक्तस्य ।

अर्घ्यः पूजाविधिः, स च पूज्याय गृहागताय दीयते । अत्र तु कन्यारूपं अर्घ्यं कृष्णाय दत्तवान् इतिभावः ।

आत्मशोधनाय—लब्धमपि मणिं क्वचित् निधाय आगतः इति दुर्जनवचनपरिहाराय ।

भगवतः श्रीकृष्णस्य आगमनेन उद्भूतः संजातः हर्षोत्कर्षः आनंदातिशयो यस्य सः तस्य तथोक्तस्य ।

कृष्णावलोकनानुक्षणमेव —कृष्णदर्शनानंतरमेव, कृष्णं दृष्ट्वैव ।

आनकदुंदुभिः—श्रीकृष्णपिता वसुदेवः । आनयति सर्वान् सोत्साहान् करोति=आनकः प्रोत्साहकः दुंदुभिः वाद्यविशेषो यस्य सः । यद्वा आनकैः दुंदुभिश्च इति द्विविधैर्वाद्यभाण्डभेदैः उपलक्षितः । वसुदेवजन्मनि देवैः आनकदुंदुभिवादनात् वसुदेवस्य तथा नाम, उक्तं च हरिवंशे—वसुदेवो महाबाहुः पूर्वमानकदुंदुभिः जज्ञे यस्य प्रसूतस्य दुंदुभ्यः प्राणदन् दिवि । आनकानां च संह्रादः सुमहानभवद्दिवि इति ।

दिष्ट्या दिष्ट्या—भद्रं भद्रं, इति आनंदेन । सभाजयामासुः पूजयामासुः ।

यथानुभूतं-यथावृत्तम् ।

यथावत्—आनुपूर्व्या ।

मिथ्याभिशस्तिविशुद्धि—मिथ्यापवादमोचनं ।

क्षुवत् *adj.* Sneezing, coughing, &c.

घ्राणतः—From the nose.
अष्टकायाम् —श्राद्धोपयोगिन्यामष्टम्याम् ।
अमेध्येन—अपवित्रेण ।
उपहत *adj.* Polluted.
शशादसंज्ञां—शशमत्तीति शशादः ।
इदं चान्यत्—पुरंजयस्य नामान्तरकारणं प्रासंगिकेतिवृत्तमपरमेतदित्यर्थः ।
अनादिनिधनः—आदिर्जन्म, निधनं मृत्युः जन्ममृत्युरहितः ।
सकलजगत्परायणः—सकलानां जगतां परं उत्कृष्टं अयनं आश्रयणं यस्मिन् सः सर्वाश्रयः ।
इह—इदानीं । कार्योद्योगः कार्यः विधेयः उद्योगः युद्धाय आयोजनं येन सः तथोक्तः ।
बाढं *ind.* Yes.
अन्वीप्सितं—अंगीकृतम् ।
आप्यायितः-वर्धितः लब्धसामर्थ्यः ।
युवनाश्वस्य संतानपरंपरा—१ विश्वगश्वः २ आर्द्रः ३ युवनाश्वः ४ श्रावस्तः ५ बृहदश्वः ६ कुवलयाश्वः ७ दृढाश्वः ८ हर्यश्वः ९ निकुंभः १० कृशाश्वः ११ प्रसेनजित् १२ युवनाश्वः ( पश्य ९ स्कं० ६ अ० ) । विष्णुपुराणे "ततश्च कृशाश्वः" इत्यस्य 'ततो निकुंभात् कृशाश्वश्च' इति लक्ष्मणदेवकृता श्रीधरस्वामिव्याख्यानुसारिणी व्याख्या अत्रानुसर्तव्या ।

अतिनिर्वेदात् —सातिशयादात्मनि अवज्ञानात् ।
निश्चकाम—संतानरूपेण इति शेषः ।
ममार—मुनीनां प्रभावादिति भावः ।
धास्यति—पास्यति । पातव्यस्तनाभावादिति शेषः ।
प्रदेशिनी—तर्जनी, अंगुलिः ।
अह्ना—दिनेन; झटिति, शीघ्रमिति तात्पर्यार्थः ।
स्म—स्मशब्दोत्र चार्थः ।
मांधातुः क्षेत्रम्—मांधातृक्षेत्रनाम्ना सर्वं भूतलं तावत् व्यवह्रियते इत्यर्थः ।
बह्वृचः—ऋग्वेदी ।
ललितं—विलासं ।
निर्वेष्टुकामः—गृहस्थाश्रमं प्रवेष्टुकामः, उद्वोढुकामः ।
अर्थितदानदीक्षाकृतव्रतं—अर्थितस्य दानरूपायां दीक्षायां यज्ञकर्मणि कृतं व्रतं नियमः येन तत् ।
राजवरातिदुःखात्—राजवर, नृपते, यत् यस्मात् अतिदुःखात् प्रार्थनाभंगभयात् अहं बिभेमि, तस्मात्तासां एकां कन्यां मम प्रयच्छेत्यन्वयः ।

यावश्यदेया &c. कन्या यस्मैकस्मैचिदपि अवश्यं दातव्या एव, तया अवश्यदातव्ययापि यदि अस्माकं कृतार्थता स्यात्, तदा अस्मदाशिषा तव श्रेयो लाभो भविष्यतीति भावः ।

सप्रश्रयं--सानुनयं ।
कुलस्थितिः--कुलनियमः ।
अभिजनवान्--सत्कुलीनः ।
एवं--य एव कन्याया अभिरुचितः तस्मै प्रदीयते इति ।
वर्षधरः--रक्षकः, षण्ढः ।
अतीतकालारंभेण—असमये चेष्टया वार्धक्ये विवाहोद्योगेन । छन्दे इच्छायां । परिपंथितां प्रतिकूलताम् ।
अहमहमिकया—अहं पूर्वमहं पूर्वमिति संरंभक्रियया ।
सृष्टाहम् &c.–अस्य पत्नीरूपेण अहं सृष्टा, अतः उपशमं प्रयाहि व्रज, एतदर्थं यत्नं मा कार्षीरित्यर्थः ।
विहन्यसे किं &c मया त्वं किं विहन्यसे हिंस्यसे, गृहं विशन्नेव अयं मया वृतः इति मया तव हिंसा नैव कृतेति भावः ।
हार्दात्—प्रणयात् ।
सावकाशाः–साभ्यंतरस्थानाः सप्रांगणाः ।
आगताः—अतिथयः ।
प्रवृत्तस्नेहाम्बुगर्भनयनः–प्रवृत्तं स्नेहाम्बु यत्र तादृशौ गर्भौ ययोः ते नयने यस्य सः ।
अहो मे मोहस्यातिविस्तारः–Now great is the growth of my folly.
परिग्रहः—विवाहः गृहस्थाश्रमस्वीकारो वा ।
विधित्साः—चिकीर्षाः संपदसंपादनेच्छाः ।
शतार्धसंख्यं—पंचाशत् । स्त्रीसमसंख्यं दुःखं जातमित्यर्थः ।
चीर्णम्–तप्तम् । एषा ऋद्धिः संपत् तस्य तपसोन्तरायः विघ्नः इत्यन्वयः ।
अपहृतः—वंचितः ।
परिग्रहग्राह &c. परिग्रहेण ग्राहेण जलजंतुविशेषेण गृहीतबुद्धिरपि भूयः परिहीणदोषः सन् जनस्य परिजनस्य दुःखैः दुःखी अहं यथा न भवितास्मि तथा आत्मनोर्थे चरिष्यामि इत्यन्वयः ।
अशेषौजसि—सर्वशक्तिमति ।
अभवाय–भजन्मने, संसारनिरोधाय।
यस्मात् &c. यस्मात् अन्यत् किंचिन्नास्ति, तं विष्णुमहं संश्रयं शरणं एमि गच्छामि इत्यन्वयः ।
परिबर्हः–परिच्छदः वसनभूषणादिः ।
वैखानसः—वानप्रस्थः ।
अग्नीनारोप्य — अग्निसमारोपणाख्यं कर्म कृत्वा । भिक्षुः यतिः ।
तुल्यवर्चसः–Of equal might.
अण्डानां &c Produced one thousand eggs.
अध्यर्धकायसंपन्नं &c. Having half formed body.
उच्चैःश्रवाः—Indra's horse.
दासीभावय—मां वा दासीकर्तुं त्वं वा दासी भवितुं ब्रूहीत्यर्थः । Say that I shall be your slave or you shall be my slave.
समय *m.* An agreement.
जिह्म *adj*. Fraud.

व्युष्टायां–Having passed.
संविद् *f* Consultation.
सर्पैरुपधिना कृतं–The serpents have played deceit or guile.
दुर्योगात्–From the adverseness of fortune.
लेलिह *m.* A serpent.
स्तन्येनैव &c. किम्बहुना त्वया शैशवे स्तन्यं पिबता पीयमानेन तेनैव सह मे हृदयमेव दुग्धरूपेण परिणतं पीतं गृहीतमित्यर्थः–You have drunk my heart with the milk of my breast.
प्रभूत &c. प्रभूतैरसंख्येयैः पत्युः प्रसादैरनुग्रहैः अंतरितं तिरोहितं त्वां मे दृष्टिर्न पश्यति। At the present time my eyes do not see you, hidden as you are from me by the immense favour of my lord.
पुरुषान्तर &c. हे प्रियपुत्र, लक्ष्मीः श्रीः संपदित्यर्थः क्षमा भूमिर्वा नास्मीति अन्वयः । राज्यस्य-स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेत्युक्तसप्तांगात्मकस्य उपकरणं सामग्री नास्मि यथा ते उभे स्तः । अन्ये पुरुषाः पुरुषांतराणि तेषां विलोकनं अंगीकरणं एव व्यसनं आसंगः अस्या अस्तीति सा तथोक्ता, सर्वधनीतिवदिन्यंतो बहुव्रीहिः । ते उभे एव तादृश्यौ अहं तु पतिव्रतात्वात् परपुरुषदृष्टिकामा नास्मि । शूरसमागमैकव्यसनिन्या लक्ष्म्या इति कादंबरी । किं च अकरुणा लक्ष्मीः क्षमा इव वा नास्मि अकरुणा निष्ठुरा तादृशतत्तत्पतिपरित्यागसमये ययोर्हृदये दयया नोदीयते अहं तु न तथा येन प्रियेण भर्त्रा परिरक्षिता तद्विपत्तौ तस्यानुगमनं न कुर्वीय इति। Moreover, O child, I am unlike Lakshmî or the Earth, and I cannot be so cruel as to feel a desire to see another person rule, and take part in the administration.
कुलकलत्रं &c कुलस्य सत्कुलस्य कलत्रं नारीजनोस्मि । सत्कुले प्रसूता सत्कुले विवाहिता चेत्यर्थः । चारित्रं सद्वृत्तं पातिव्रतमिति यावत् धनं यस्याः सा तादृशी धर्मेण धवले विमले कुले वंशे जाता उत्पन्ना समराणां शतेषु शौंडस्य दक्षस्य समरशतविजयिनः शूरस्येति यावत् प्रशस्तः पुरुषः पुरुषप्रकांडं तस्य । अस्त्री प्रकाण्डो विटपे तरुस्कंधप्रशस्तयोरितिरभसः । प्रशंसावचनैश्चेति नित्यसमासः । केसरिणः सिंहस्य केसरिणीं नित्यसंनिहितामित्यर्थः । वीरात् पितुः जाता वीरजा वीरस्य जाया पत्नी वीरयोर्युवयोर्जननी जन्मदात्री पराक्रमेण शुल्करूपेणेत्यर्थः क्रीता ।

त्वत्पितुः पराक्रमगुणैर्मुग्धाहं तस्य करे आत्मानं समर्पितवती । मादृशी मत्समा स्त्री कथं केन प्रकारेण अन्यथा विपरीतं कुर्यादाचरेत् न कदापीत्यर्थः।

भरतभगीरथनाभागप्रतिमेन &c. भरतश्च भगीरथश्च नाभागश्च ते ते प्रतिमा उपमानं यस्य स तेन तथोक्तेन । नरेन्द्रो वृंदारक इवेति नरेन्द्रवृन्दारकः । वृंदारकनागकुंजरैः पूज्यमानमिति समासः वृंदारकशब्दः प्रशंसायामिति शंकरः । My hand has been accepted in marriage by an excellent king your father who resembles भरत, भगीरथ and नाभाग.

आसेवितः &c—सेवायां संभ्राताभिः ससंभ्रमाभिः । सादराभिरित्यर्थः । अनंताभिः असंख्येयाभिः सामंतानां करदभूपानां सीमंतिनीभिः पत्नीभिः समावर्जितैः समाहृतैः स्नपनसमये अवनमितमुखैरिति वा जांबूनदस्य स्वर्णस्य घटैः कर्णैः अभिषेकः शिरसा आसेवितः अनुभूतश्च महिषीत्वे च वृताहं तेनेत्यर्थः । I have enjoyed a coronation in which water was poured on me from golden jars by the wives of innumerable feudatory chiefs who were anxious to serve me.

लब्धो मनोरथदुर्लभः &c.—मनोरथस्य मनोरथस्यापीत्यर्थः । दुर्लभः अन्यासां मनोरथानामप्यविषयः । महादेव्या महिष्याः शिरसि यः पट्टस्य राजमहिषीत्वसूचकस्य किरीटाकारस्य शिरोभूषणविशेषस्य बन्धो योजनं एव सत्कारः आदरः तस्य लाभो ललाटेन लब्धः । अन्यवनितादुर्लभेणाधःकृताशेषांतःपुरेण हेमपट्टलांछनेन छत्रवेत्रचामरचिह्नेन महादेवीशब्देन परं प्रीतः प्रसादमकरोदिति कादम्बरी । यूयं विधा येषां ते तैस्तथोक्तैः अपत्यैः अमित्राणां शत्रूणां कलत्राणि भार्या एव बंद्यो रणे बंदीकृत्यानीतास्तासां वृंदैः विधूयमानानां संचार्यमाणानां चामराणां मरुद्भिः पवनैः चलः सकंपः । चीनस्य चीनदेशनिर्मितमित्यर्थः अंशुकं चीनांशुकमिति पटवस्त्रस्य संज्ञा । तस्य धरौ पयोधरौ स्तनौ पीतौ । स्त्रीणामिदमेवाधिकमभीष्टं यत् पत्या सत्कारः सत्पुत्रस्य प्रसवश्च । नमंतीनां अभिवादने पादौ स्पृशंतीनां निखिलस्य सर्वस्य कटकस्य सैन्यस्य कुटुंबिनीनां पत्नीनां किरीटेषु मुकुटेषु यानि माणिक्यानि उत्कृष्टमणयः । माणिक्यमुत्कृष्टो मणिरिति शंकरः । तेषां मालाभिः श्रेणिभिः अर्चितं पूजितं चरणयोः

युगलं सपत्नीनां प्रतियुवतीनां शिरस्सु निहितं अर्पितं । एवमुक्तेन प्रकारेण कृतार्थो: अधिगतसाफल्या ऐहिकसर्वसुखभोगेनेत्यर्थः । सर्वे अवयवाः अंगानि यस्याः सा तथोक्ता । अपरं पर्याप्तसर्वसुखत्वात् किमन्यत् अपेक्षे कांक्षामि । क्षीणानि भोगेन निःशेषितानि पुण्यानि राज्यसुखोपलंभकानि सुकृतानि यस्याः सा ।

मर्तुमविधवैव &c. अविधवैव पतिपत्नी एव मर्तुं अग्निप्रवेशं कर्तुमित्यर्थः वांछामि । भर्तरि पत्यौ दग्धे भस्मीभूते आर्यपुत्रेण भर्त्रा विरहिता विनाकृताहं भर्तरि स्वामिनि कामे दग्धे शिवनेत्राग्निनेत्यर्थः । निरर्थकान् विफलान् प्रलापान् करुणरोदनानि कर्तुं न शक्नोमि नाभ्युत्सहे । ते पितुः पादधूलिरिव गगनगमनं स्वर्गप्रस्थानं आवेदयंती यथा पथि गंतुः पादहता धूलिरग्रे प्रतिष्ठते तथा प्रथममग्निप्रवेशं कृत्वा स्वर्गारूढामित्यर्थः । यद्वा गम्यते अनेनेति गमनं पंथाः । तथा च पत्युः गमनस्य पंथानं दर्शयंती । शूरेष्वनुरज्यंते इति शूरानुरागिण्यः इदं च विशेषणं हेतुगर्भं शूरे पत्यौ मे अनुरागं दृष्ट्वा प्रीताः सुरांगनाः मयि बहुमानं करिष्यंतीत्यर्थः । कथं च स्वर्गगमनोन्मुखस्य देवस्य रुदितेन अमंगलं करोमि कथं वा पादधूलिरिव पादावनुगंतुमुद्यता हर्षस्थाने रोदिमि इत्युत्तरकादंबरी । प्रत्यग्रं नूतनं दारुणत्वस्यातिशय्यद्योतनार्थमिदं विशेषणं । दृष्टं अनुभूतं यद्दारुणं दुःखं तेन दग्धाया मे धूमध्वजो वह्निः किं धक्ष्यति नहि सर्वथा दग्धाया दाहपीडानुभवसंभावनास्तीति भावः। दहनजा न पृथुर्दवथुव्यथा विरहजैव पृथुर्यदि नेदृशम् । दहनमाशु विशंति कथं स्त्रियः पतिमपासुमुपासितुमुत्सुका इति नैषधं । अस्मिन्नेतादृशे समये मरणात् मरणापेक्षया जीवनधारणमेव साहसं धाष्टर्यम् । पत्यौ मृते या कुलस्त्री सहानुगमनं न करोति सा एव धृष्टा न तु कृतान्वारोहणानां साहसं वक्तुमुचितं इत्यर्थः । अस्मिंस्तु समये मरणमेव श्रेयो न जीवितं मे सर्वप्रकारलज्जाकरं तु जीवितं न पुनर्मरणमित्युत्तरकादंबरी । अनिवार्यं वह्निदाहदुःखं कथं न भवेदित्याशंक्याह । अक्षयः स्नेह एव इंधनं यस्य स तस्मात् पतिशोकानलात् अनलः लौकिकः प्रसिद्धोग्निः अतिशीतलः सुतरां शिशिरः जीविते धार्यमाणे सुदुःसहः पतिशोकदुःखदाहः सोढव्यः यस्य उपशमसंभावनापि नास्ति अक्षयेंधनत्वात् निरंतरदहनशीलः । अयं दाहस्तु क्षणिकः इत्यर्थः । अथ वा परमार्थत एव दाहदुःखं नानुभविष्यामि यतः पतिव्रतासु अग्नेः शी-

तलतया वृत्तिर्हिमोपमा । तस्य परी- क्षणक्षणे सतीषु वृत्तिः शतशोऽव- लोकिता इति नैषधम् । पतिव्रता- याः सीतायाः प्रार्थनेन हनूमंतं प्रति अग्नेः शीतलत्वं जातं तच्च प्रसिद्धं तथापि अतिकष्टासु दशास्वपि जी- वितनिरपेक्षा न भवंति खलु जग- ति प्राणिनां वृत्तयः नास्ति जीवि- तादन्यदभिमततरमिह जंतूनामिति पुत्रेण वक्तव्यमाशंक्य निराकरोति । ईषदूनः कैलासः कैलासकल्पः कैलाससदृश इत्यर्थः । कल्पबादी- नां दण्डिना औपम्यवाचकत्वभि- धानात् । शुद्धे तीर्थस्वरूपे इत्यर्थः जीवितस्य प्राणानां ईश्वरे प्रभौ । अनेन नाहमात्मजीवितस्य प्रभवा- मि अपि तु स एव इति गम्यते । अतो यतस्तस्य गमनं तत्र ममा- पीति भावः। जरती जीर्णा या तृ- णस्य कणिका क्षुद्रांशः सेव अति- शयेन लघु तुच्छं तस्मिन् तथोक्ते जीविते लोभस्तृष्णा क कदा घट- ते उपपद्यते । सर्वथा सा अनुपपन्ना या पतिहीनाया मे जीविताकांक्षा इति भावः । Un-fortunate as am, I wish to die without becoming a widow. I cannot make up my mind to survive my lord and make useless lamentation like the bereaved रति when her lord was burnt to ashes. When I reach heaven before hand like the dust of your father's feet, and inform the celestial nymphs who love bravery, about his going there, they will greatly approve of my conduct. What more can the fire burn of me already consumed as I am with the fire of terrible and unusual grief. It would be an audacity to live at the present time rather than to die. Real fire is cool compared with the fire of grief for my lord—the fire which is fed by the inexhaustible fuel of affection. When my beloved lord is going away, it is absurd that I should love my own life which is as insignificant as a bit of rotten straw. &c.

जीवन्तीमपि &c. अपि च नरपते र्मरणस्य यदवधीरणं अग्निप्रवेश- करणात् उपेक्षणं तदेव महापातकं पातित्यापादकं गुरुतरदुष्कृतं पति- व्रतानां कलंकरूपं अस्त्यस्या इति तां तथोक्तां जीवंतीमपि मां हे पुत्र पुत्रस्य राज्ये यानि सुखानि

त्वाम न स्प्रक्ष्यंति राज्यसुखसंपर्के एव विधवाया मे न संभाव्यते इत्यर्थः । Moreover even if I were to live, I could not derive any pleasure from my son's rule great sinner as I should prove myself to be for neglecting the death of the king.

दुःखदग्धानां च &c. यथा दग्धानां चितानले भस्मीभूतानां भूतिर्भस्म अमंगला अपवित्रा च अप्रशस्ता अशुभा च निरूपयोगा च क्वचिदपि लोके वेदे च तस्या उपयोगो न दृष्टः तथा दुःखेन पतिवियोगरूपेण वैधव्येनेत्यर्थः । दग्धानां भूतिर्विभवोऽमंगला अशोभना च अप्रशस्ता निंदिता च निरुपयोगा निरर्थका च सर्वसुखमूलस्य भर्तुरभावादेवेत्यर्थः । अतस्तेभ्यः सुखेभ्यो न स्पृहये इति भावः । विश्वस्तानां विधवानां, विश्वस्ता विधवे समे इत्यमरः । तासां मध्ये यशसा स्थातुमिच्छामि यशोभाजनं भवितुमिच्छामीत्यर्थः । प्रसादयामि आत्मनः । अग्निप्रवेशाभ्युपपत्तये आर्जवयामि । प्रातिकूल्येन प्रतिलोमवृत्त्या अननुमोदनेनेत्यर्थः । कदर्थनीया उद्वेजनीया । त्वं मे प्रतिकूलाचरणं कर्तुं नार्हसि इत्यर्थः । यशःशरीरे भव मे दयालुः

एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेष्विति रघुः । अपनीय पश्चात् प्रतिसार्य । अवनमिता चरणग्रहणायागच्छंत्या मातुर्वर्जनाय प्रह्वीकृता तनुः शरीरं येन सः । उभाभ्यां कराभ्यां धृतं वपुर्यस्याः सा तां तथोक्तां । उदनमयत् उत्थापयामास । शुचः शोकस्य दुर्निवारतां अप्रतिविधेयतां, समवधार्य नेयमस्मात् व्यवसायात् चालयितुं शक्येति संप्रधार्य । तामेव पत्युः पूर्वस्मरणरूपां क्रियां श्रेयसीं प्रशस्ततरां । तूष्णीं मौनेन अधोमुखः चिंतावनमितमुखः मौनेनानिषेधरूपं उत्तरं दत्वा तां मरणायानुमेने इत्यर्थः ।

अभिनंदति हि &c. स्नेहेन हेतुना कातरा दुःखसहनभीरुः कुलीनता आभिजात्यं कुलपुत्रतेत्यर्थः । अनुरूपं योग्यं, अभिनंदति अनुमोदते । पौराणां पुरे भवानां आक्रंदस्य रोदनध्वनेः प्रतिशब्देन प्रतिध्वनिना निर्भराभिर्भरिताभिः उपरुध्यमाना अनुरोधवचनैः प्रतिनिवर्त्यमाना इव । एतावदुक्त्वा विरते मृगेंद्रे प्रतिस्वनेनास्य गुहागतेन शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव । द्रिरिव प्रतिशब्देन व्याजहार हिमालयः इति च कालिदासः । चरणाभ्यामिति पादगमने पुण्यविशेषाम्नानात् । इंदोरियमैन्दवी चान्द्रमसी

मूर्तिः भानुमंतं सूर्यमिव। अमावास्यायामिंदुर्भानुमंतं प्रविशतीति प्रसिद्धं। स्त्रीस्वभावेन कातरैः न तु मरणभयादितिभावः। चितिभ्रष्टा तु या नारी मोहाद्विचलिताभवेत् प्राजापत्येन शुद्ध्येत तस्माद्वै पापकर्मण इति आपस्तम्बेन दोषस्मरणात्। कातरैः अधीरैः दृष्टिपातैः विप्रेक्षितैः प्रविकासितानां प्रस्फुटितानां रक्तपंकजानां पुंजैर्निकरैरर्चयित्वेव। प्राविशत्। क्षत्रियादीनां पृथक्चितेरनिषिद्धत्वात् पृथक्चितिः कृतेति ज्ञेयम्। तदुक्तमुशनसा पृथक्चितिं समारुह्य न विप्रा गंतुमर्हति अन्यासामेव नारीणां स्त्रीधर्मोयं परः स्मृतः इति। मृच्छकटिके च। एषा आर्यचारुदत्तस्य वधूरार्या धूता पदे वसनांचले विलपंतं दारकमाक्षिपंती बाष्पभरितनयनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति। धूता। जात मुंच मां मा विघ्नं कुरुष्व बिभेमि आर्यपुत्रस्यामंगलाकर्णनात्। रोह०। मातरार्ये प्रतिपालय मां त्वया विना न शक्नोमि जीवितं धारयितुं। विदू०। भवत्यास्तावद्ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरंति ऋषयः। धूता। वरं पापाचरणं न पुनरार्यपुत्रस्यामंगलाकर्णनमिति। गारुडे च। पतिं कंठगतप्राणां दृष्ट्वा चैव पतिव्रता संकल्प्य चात्मनः प्राणानिदं वचनमब्रवीत् (ब्रूयात्)। देवैः संपादितो मह्यं पतित्वे सर्वदैवते त्वया सह गमिष्यामि भर्ता त्वं चान्यजन्मनीति।

अपश्यच्च &c. स्वल्पा अवशेषा प्राणानां वृत्तिर्व्यापारः श्वासक्रियेति यावत् यस्य स तं तथोक्तं परिवर्त्यमाने तारके कनीनिके यस्य स तं पक्षे परिवर्त्यमानाः अस्तगमनसमये इत्यर्थः तारकास्तारा येन स तं तथोक्तं तारकराजं चंद्रमिव। अस्तमिति मांतमव्ययं। अथ वा अस्तं अवसानं भावे क्तः। मरणमित्यर्थः। पक्षे तिरोधानं पश्चिमाचलगमनमित्यर्थः अभिलषंतं मरणासन्नं पक्षे अस्तगमनोन्मुखमित्यर्थः। जनयितारं पितरं। असह्येत्यादौ चिरं रुरोद इत्यन्वयः। असह्यस्य सोढुमशक्यस्य शोकस्य उद्रेकेण आधिक्येन अभिभूतो विवशः। स्नेहेन हेतुकर्त्रा धैर्यं त्याजितः। त्यजेर्ण्यन्ताद्द्विकर्मकात् अप्रधाने कर्मणि क्तः द्विकर्मसु पचादीनां चोपसंख्यानमिष्यत इति पचादित्वात् त्यजेर्द्विकर्मकत्वं। दुर्दुष्टो मदो येषां ते दुर्मदा आत्तदर्पाः। सकलानां दुर्मदानां महीपालानां मौलिभिः किरीटैः लालितौ सादरं गृहीतौ। पादौ पद्माविवेति पादपद्मौ। आश्लिष्य दृढमुपगुह्य अंतर्मनसि यस्तापः शोकोष्मा तस्माद्धेतोः द्रवीभवत् द्रव्यभावमापद्यमानं

मुखचन्द्रमिव । जलतामापद्यमानं अधिगच्छत् तद्रूपेण परिणमतदित्यर्थः। दंतानां दशनानां ज्योत्स्नायाः प्रभायाः जालं पटलमिव। विलीयमानं द्रवीभूय विगलत् लोचनयोः नेत्रयोः लावण्यं सौन्दर्यं । स्यंदमानं क्षरंतं मुखस्य सुधासदृशं रसं द्रवमिव । अच्छाच्छं स्वच्छधवलं अश्रूणां स्रोतसां धाराणां संतानं वर्षन् मुंचन् महांतो मेघः प्रकृता इति महामेघमये, तादृशे विलोचने नयने यस्य स तथोक्त इव । अश्रुवृष्टेराधिक्यादित्यर्थः । इतरवत् प्राकृतजनवत् विमुक्तो रावः शब्दो येन स तथोक्तः ।

उपरिरुध्यमानदृष्टिः-- With his eyes turned upwards.

अविरत--श्रवणः &c. And the unremitting sound of weeping constantly ringing in his ears. अविरतैरविच्छिन्नैः रुदितस्य शब्दैराश्रिते व्याप्ते अनुजिघ्नते इत्यर्थः श्रवणे कर्णौ यस्य सः प्रत्यभिज्ञाय कण्ठस्वरेणेत्यर्थः ।

भवद्विधा महासत्वा न मुह्यन्ति-- Persons like yourself possessed of great strength of mind do not lose heart. एवं शोकपरवश इत्यर्थः। महत् सत्वं धैर्यं येषां ते तादृशाः भवाद्विधाः त्वादृशाः न मुह्यंति । इतरवद्धैर्यमुत्सृज्य मनसा नावसीदंति ।विपादिधैर्यस्य महत्वलक्षणेषु उक्तत्वात् । किमिवावसादकरमात्मवतामिति भावः । यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यते प्राकृतश्चाल्पसत्वश्च इतरः कः सहिष्यति । इति वाल्मीकीये ।

महासत्वता हि &c. People attach great importance to the power (of mind), and next to it they look to nobleness of birth. You occupy a foremost place among firm-minded persons, you are the receptacle of all the good qualities. Yourself and the bewilderment caused by grief—Oh! What an inconsistency between the two (lit. where are you and where is the bewilderment). चलंति गिरयः कामं युगांतपवनाहताः कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः इति चण्डकौशिकं ।

तथा हि--लघूकरणमिव &c. दिनकरसदृशतेजसः सूर्यसमानवर्चसः कुले प्रदीप इव वंशोद्योतकः आसीः इति वचनमिति शेषः । प्रदीपेन सह औपम्यदर्शनं लघूकरणमल्पीकरणमिव भवतीति शेषः । नातिगौरवपदमित्यर्थः ।

पुरुषसिंहोऽसीति--निंदेव &c. पदु-

प्रज्ञया कुशाग्रीयाधिया उपबृंहितो वर्धितः पराक्रमः यस्य स तस्य तथोक्तस्य सहजः पराक्रम एव यदा विभूतिहेतुस्तदा किमु वक्तव्यं स यदि बुद्धिबलेन एधितः स्यादितिभावः । पुरुषः सिंह इवेति पुरुषसिंहः ) उपमितं व्याघ्रादिभिरित्यादिना समासः । असि इति निंदा इव प्रतिभातीति शेषः । सिंहस्य पशुत्वेन वा निंदास्पदत्वं इति भावः। तथा च माघः । प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि तौ हि मूलमुदेष्यंत्या जिगीषोरात्मसंपदः इति ।

क्षितिरियं——पुनरुक्तामिव &c. लक्षणैः स्वचिह्नैः सामुद्रिकोक्तैस्त्वयि दृष्टैरितिशेषः । चक्रवर्तिलक्षणं यथा सामुद्रिके । अतिरक्तः करो यस्य ग्रथितांगुलिको मृदुः चापांकुशांकितः सोऽथ चक्रवर्ती भवेद् ध्रुवं इति । आख्यातं चक्रवर्तिपदं सार्वभौमप्रतिष्ठा यस्य तस्य तथोक्तस्य ते इयं क्षितिः गृह्यतामितिवचनं पुनरुक्तामिव निष्प्रयोजनमित्यर्थः । पुनरुक्तवचनस्य वक्तृदोषाख्यापकत्वात् सर्वथा एतदुक्तुमनर्हमित्यर्थः ।

गृह्यतां—विपरीतमिव &c. श्रीर्लक्ष्मीर्गृह्यतां स्वीक्रियतामिति वचनं लक्ष्म्या स्वयं गृहीतस्य आश्रयतया स्वीकृतस्य ते विपरीतमिव कर्मणि कर्तृधर्मारोपेण वैपरीत्यं । न खलु गृहीतायाः पुनस्त्यागं विना ग्रहणं संभवतीति भावः

अध्यास्यतामयं लोक——अपुष्कलमिव &c. अयं लोकः मध्यमलोकः अध्यास्यतां आत्मीक्रियतां इति उभयलोकविजिगीषोस्तव अपुष्कलमिव अपर्याप्तमिव ।

स्वीक्रियतां——निरुपयोगमिव &c. शशिनश्चंद्रस्य करनिकराः रश्मिप्रकरा इव निर्मलानि तेषां यशसां संचये उपार्जने एको मुख्यः अवश्यमिदं कर्तव्यमित्याग्रहातिशयोऽभिनिवेशः अस्य अस्तीति तथोक्तस्य "सर्वस्व फलिनः" इति वदिन्यंतो बहुव्रीहिः । कोषागारं धनागारं स्वीक्रियतां गृह्यतामिति वचनं निरुपयोगं यशोधनस्य ते निरर्थकमेव।

आत्मीक्रियतां——गतार्थमिव &c. राज्ञां समूहो राजकं आत्मीक्रियतां स्ववशमानीयतां इति वचनं, गुरूणां महतां गुणानां शौर्यसौजन्यादीनां गणैरात्मीकृतं वशीकृतं जगद्येन स तस्य तथोक्तस्य ते गतार्थं निखिलं जगदेव तव गुणैर्वशीभवति तदा तदंतर्गतं राजकं अर्थात् स्वयमेव वशीभूतं स्यात् तस्य पुनर्वशीकरणाय प्रवर्तनस्यानवकाशादित्यर्थः To advise you to establish your rule over feudatories is to bid you do something which is useless, because when you have made the

world your own by the excellent qualities you are possessed of the feudatories necessarily come under the term—world.

उह्यतां—अनुचितनियोग इव &c. भुवनानां त्रयस्य भारे भारसहने उचितस्य योग्यस्य ते राज्यस्य भार: उह्यतां धार्यतामिति अनुचित: असमंजस: नियोगो व्यादेश इव न शोभते इत्यर्थ: । न खलु सामान्ये कार्ये कश्चिन्महान् नियुज्यते इति भाव: ।

प्रजा:—अनुवाद इव &c. दीर्घाभ्यां प्रलंबाभ्यां । दोषौ बाहू एव दंडौ ताभ्यां अर्गलितानि अर्गलवंति कृतानि विष्कंभितानि इति यावत् दिशां मुखानि द्वाराणि येन स तस्य तथोक्तस्य निखिलादिग्दिगन्तरक्षितुरित्यर्थ: ते त्वद्विषये इत्यर्थ: । प्रजा: परिरक्ष्यंतामिति निदेशोऽनुवाद: सिद्धस्योपन्यास इव भवति । To tell you to protect the people is but a reiteration, because you have with your long arms bolted the entrance of several quarters.

परिजन:—आनुषंगिकमिव &c. लोकपाला उपमा यस्य तस्य तथोक्तस्य ते परिजन आश्रितोजन: प्राल्यतामिति अनुषंगात् प्रस्तावादागतमानुषंगिकमिव । अन्योद्देशेनारब्धस्य सति संभवे अन्यत्रापि प्रसज्जनमनुषंग: । तथा हि लोकपालैरिव तानि तानि महांति कर्माणि कुर्वता त्वया परिजना अपि पालनीया इत्यनुषंगेण प्रवर्तनमिव भवति ।

शस्त्राभ्यास:-आदिश्यते &c. धनुर्गुणस्य मौर्व्या य: किण: आघातग्रंथि: स एव कलंको लांछनं तेन कालीकृत: कृष्णिमानं नीत: प्रकोष्ठ: कूर्परादधोदेशो यस्य तस्य तथोक्तस्य ते किमादिश्यते आदेशस्य प्रसर एव नास्तीत्यर्थ: ।

निग्राह्यतां–वाणी &c. नूतनतरे वयसि नवयौवने निगृहीतानि संयतानि इंद्रियाणि येन स तस्य तथोक्तस्य ते चपलस्य भावा: कर्माणि वा चापलानि तेषां जातं बाहुल्यं निग्राह्यतां नियम्यतां ज्ञानेनेति प्रयोज्यकर्तृ अध्याहर्तव्यं । इति मे वाणी निर्नास्ति अवकाश: प्रवृत्तिर्यस्या सा तादृशीव वर्तते तत्र नास्ति मे वचनावकाश इत्यर्थ: । A word of advise to keep the senses in check is uncalled for, when you have already restrained them in your youthful days.

निरवशेषतां–लोचने &c. शत्रवो वैरिण: नास्ति अवशेषो येषां ते निरवशेषा तेषां भावस्तत्तां उच्छेद-

मित्यर्थः । नेयाः प्रापणीयाः इति सहजस्य नैसर्गिकस्य तेजस इव ते का चिंता विचारः ते स्वयमेवागत्य तव प्रतापाग्नौ शलभतां प्राप्स्यंति तेषां समुच्छेदो न खलु त्वदायाससापेक्ष इत्यर्थः । अत्र प्रशंसामुखेन तत्तदवश्यकर्तव्यानां करणायोत्साहयितुं पुत्रं पिता तत्कालोचितमुपदिदेशेतिज्ञेयम् । To say that you ought to extirpate your enemies is unnecessary, because it is a matter not worth serious attention, being an easy task for your natural bravery,— with these words the powerful king closed his eyes not to open them again.

राजवल्लभाः—विविक्षुः &c. राज्ञो वल्लभा राजा वल्लभो येषामिति वा । निर्गत्य गृहादिति शेषः । पुत्राश्च दाराश्चैतेषां समाहारः पुत्रदारं वधूवरमितिवत् । जातिरप्राणिनामिति निषेधस्तु प्राणिवाचिन्याः प्रधानजातेरेव । इतरेतरद्वंद्वेनापि अनयोः समासो दृश्यते, तथा हि, स्मृतं स्यात्पुत्रदाराणामिति मुद्राराक्षसे । पुत्रदारस्य चाप्येनं शिरांसि स्पर्शयेत्पृथगिति तु मनुसंहितायां समाहारप्रयोगः । उद्गत उदितो बाष्पो नेत्रजलं येषां तैर्बन्धुभिर्वार्यमाणा निषिध्यमानाः बहुभिर्नृपस्य गुणैर्हृतमायत्तीकृतं हृदयं येषां ते तथोक्ताः भृगुषु अतटेषु उच्चस्थानेषु तेभ्यो निपत्येत्यर्थः बभंजुः । तत्रैव भृगुस्थानेषु एव तीर्थेषु तस्थुः तीर्थवासमंगीचक्रुः । कथत् संतप्यमानं मनो येषां ते तथोक्ताः । असमां विषमां शुचं भूपतेर्विरहदुःखं अशमयन् व्यपानयंत । विश्वानरो नाम ऋषि तस्यापत्यं वैश्वानरोग्निः ।

केचिद्—जगृहुः &c. दारुणेन दुःखरूपेण दहनेन दह्यमाना विग्रहा देहा येषां ते तथोक्ताः गृहीता निगृहीता वाक् यैस्ते वाचंयमाः । तुषारशिखरिणं हिमशैलं शरणमुपययुः तत्राश्रयं जगृहुः । वनस्य करिणां गजानां कुलानां यूथानां करेषु शुण्डासु ये शीकराः अम्बुकणाः तेषामासारैः संपातैः सिच्यमाना आर्द्रीक्रियमाणा तनुः कलेवरं येषां ते तथोक्ताः । उपत्यकासु उपकंठेषु संतापं शोकखेदं उष्माणं चेति गम्यते । सन्निहितान् अनायाससाध्यान् विषयान् इंद्रियसुखानि उत्सृज्य त्यक्त्वा सेवाविमुखाः नृपांतरस्येत्यर्थः । तादृशः प्रभुरपरो जगति दुर्लभ इत्यनुचिंत्येति भावः । परिच्छिन्नैः परिमितैः पिंडकैर्ग्रासैरुपलक्षिताः चांद्रायणादिव्रतपरा इत्यर्थः । अथ वा यावता जीवनधारणं भवेत तावन्मात्राहारा इत्यर्थः ।

अटवीभुवः वनप्रदेशान् जगृहुर्निवासत्वेनांगीचक्रुः । वानप्रस्थाः बभूवुरित्यर्थः ।

केचित्पवनाशनाः--विचेरुः &c.धमन्यः कृशसंतताः इत्यर्थः। धमन्यो नाड्यो येषां ते तथोक्ता अतिकृशा इत्यर्थः । मुनयः तापसाः । गृहीतं काषायं गैरिकादिरंजितं वस्त्रं यैस्ते तथोक्ताः संन्यासिनः इत्यर्थः । कापिलं कापिलमुनिना प्रोक्तं सांख्यं प्रकृतिपुरुषविवेकोपलंभकं शास्त्रमित्यर्थः। अधिजगिरे पठितवंतः।आच्छोटिताः अपवर्जिताः चूडामणयो येभ्यः तेषु तादृशेषु शिरस्सु दूराकृष्टधनुर्गुणाच्छोटनटंकारेणेति वेण्यां । जटाः जघाटिरे चूडामणिस्थाने जटा बबन्धुरित्यर्थः । किं भूताः शरणीकृत आश्रितो धूर्जटिः शिवो यैस्ते तथोक्ताः । परिपाटलेन शोणवर्णेन प्रलंबेन दीर्घेण चीवरेण वल्कलरूपेण मुनिवाससा संवीताः संवृताः स्वामिनि प्रभौ योऽनुरागस्तं उज्ज्वलीचक्रुः सविशेषं प्रकटयांचक्रुरित्यर्थः । तपसो वनस्य हरिणानां जिह्वातलैरुल्लिह्यमाना मूर्तयो येषां ते तथोक्ताः । जरां वार्धक्यं जग्मुः मुनिव्रता एव कालमतिवाहयांचक्रुः । गृहीतं व्रतं दीक्षा यैस्तथोक्ताः मुण्डाः न्युप्तशिरसः पाणी पल्लवौ इवेति पाणिपल्लवौ ताभ्यां प्रमृष्टैः प्रोंच्छितैः राताम्रा अरुणा रागा येषां तैस्तथोक्तैः उभयपक्षेपि समानं नयनपुटैः नेत्रोदरैः कमण्डलुभिः करकैश्च वारि अश्रुजलं अन्यत्र क्रियानिमित्तजलं वहंतः विचेरुः पर्यटंति स्म ।

देवमपि—पर्यवारयन् &c. देवमित्यादौ देवमपि हर्षे एवं विधाः जनाः पर्यवारयन् इत्यन्वयः । पितृशोकेन विह्वलीकृतं व्याकुलीकृतं, श्रियं शाप इत्यादौ मन्यमानमित्यनेन सम्बंधः । शापवत् अनभिमता श्रीर्बभूवेत्यर्थः। मही महापातकवत् जुगुप्सापदं बभूवेत्यर्थः । राज्यं रोगो रोगवत्क्लेशकरं विषयविद्वेषादिति भावः । भोगान् भुजगा इति भुजगवदुद्वेगकरानित्यर्थः । निलयं गृहं निरय इति नरको यातनाभोगस्थानमिव तस्मै नरोचेत स्मेत्यर्थः। बन्धून् भ्रात्रादीन् बन्धनामिति निगडवत् स्वातंत्र्यनाशकत्वाद्दुःखाकरानित्यर्थः । जीवितं पितृमरणेऽपि जीवनधारणं अकीर्तिकरमित्यर्थः । देहं द्रोह इति शरीरधारणं अनिष्टोत्पत्तिकारणं अतः अनाशास्यमित्यर्थः । कल्यतां आरोग्यं कलंको दोषः। आयुरपुण्यस्य दुष्कृतस्य फलं कामं ककच इति ककचवत् हृदयदारण इति । हृदयस्फुटनं हृदयविदारणं अभ्युदयः संपदिति । सुखिनो जनस्य यानि यान्यभीष्टानि जगति तान्येव दुःखितस्य तस्य

दुःखकारणान्यभूवन्निति तात्पर्यम्। पित्रा पितामहेन च यः परिग्रहः स्वीकरणं अधिकारपदेषु नियोग इत्यर्थः तस्मादागताः। कुलपुत्राः उदात्तान्वयप्रसूताः। वंशस्य क्रमेण परंपरया आहितं कृतं गौरवं आदरातिशयो येषु ते तथोक्ताः। ग्राह्याः अनतिक्रमणीया गिरो वाचो येषां ते तथोक्ताः आदेयवाच इत्यर्थः। गुरवो वेदाध्यापयितारः श्रुतिषु वेदेषु स्मृतिषु मन्वादिप्रणीतेषु धर्मशास्त्रेषु इतिहासेषु भारतादिपुरातनकथानकेषु विशारदाः विचक्षणाः। जरद्विजातयो वृद्धब्राह्मणाः। अधिगतैर्गुरूपदेशालब्धैर्निखिलैर्जिनस्य सुगतस्य वचनैर्विदिता ज्ञाता विपरीता लोकस्य यथा सुखे दुःखबुद्धिः दुःखे च सुखबुद्धिरित्यात्मिका भ्रांतिमयीति यावत् स्थितिः यैस्ते तथोक्ताः। धर्मस्य इतिकर्तव्यताया देशनायां अनुशासने पटीयांसः सुदक्षाः। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोरितिणिनिः। श्रुतेन शास्त्रज्ञानेन अभिजनेन पित्रादिपूर्वसंबंधेन आभिजात्येनेत्यर्थः। शीलेन सत्स्वभावेन सदाचारेण वा। यद्वा श्रुताभ्यां अभिजनशीलाभ्यां शालंते इति तथोक्ताः। मूर्धाभिषिक्ताः सत्क्षत्रियवंशजाः। आत्मनि इत्यध्यात्मं आत्मानमधिकृत्योपक्रांतं वेदांत इत्यर्थः। तत् यत् तंत्रं शास्त्रम्। तत् यथावदधिगतं यैस्ते तथोक्ताः संस्तुताः परिचिताः मस्करिणः परिव्राजकाः। सनाभयः ज्ञातयः चित्तज्ञाः आशयज्ञाः। निष्कारणं स्वार्थाभिसंधिरूपं कारणमंतरेणैव बांधवाः हितैषिणो मुनयः। संसारासारस्य संसारासारत्वस्य कथने कुशलाः। यद्वा असार इति कथनं असारकथनं संसारस्य असारकथनमितिविग्रहः। ब्रह्म वेदं वदंति उपदिशंतीति ब्रह्मवादिनः अधीतवेदांताः अध्यात्मज्ञानोपदेशदक्षा इत्यर्थः। शोकस्य अपनयने दूरीकरणे ज्ञानगर्भैरुपदेशैरित्यर्थः। पुराणानि, सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च वंशानुचरितं चैव पुराणं पंचलक्षणमित्युक्तलक्षणान् धर्मग्रंथान् विदुरिति पौराणिकाः पर्यवारयन् परिवृत्य तस्थुः। अस्वतंत्रीकृतश्च—अतिष्ठत् &c. तैः पूर्वोक्तैः जनैरस्वतंत्रीकृतः संयंत्रितः शोकस्य अनुप्रवणं अनुरूपं रोदनादीत्यर्थः। अनुचरितुं मनसापि नालभत अनुक्षणं तैः परिवृतः ज्ञानगर्भैः प्रबोधवचनैः परिसांत्वितः स मनसि दुःखप्रसरं दातुमवसरं न लेभे इत्याशयः। अनुनीयमानः प्रार्थनादिना अभिमुखः क्रियमाणः। अभजत स्वीचक्रे। भ्रातरि राज्यवर्धने गतं तत्क्षणं भ्रातुश्चित्तपथारूढतया तदनुध्यानपर-

मित्यर्थः । चित्तं यस्य सः तथोक्तः । उपश्रुत्य जनमुखादाकर्ण्य बाष्पजलस्नातः वल्कले न गृह्णीयात् वानप्रस्थो न भवेत् स्नानपूर्वकस्य मुनिव्रतधारणस्याम्नातत्वात् । पुरुषः सिंह इवेति पुरुषसिंहः सिंहस्य गिरिगुहाप्रवेशः स्वाभाविकएव । अश्रुसलिलेन निर्भरं भृशं भरितं परिपूरितं नयनयोर्युगलं यस्य स तथोक्तः पृथिवीं अनाथां नाथरहितां न पश्येद्वा । बाष्पपरिप्लुतदृष्टेर्दर्शनशक्तिः प्रतिहता भवत्येवेति भावः । प्रथममापतितं व्यसनं दुःखाभिषंग एव यत् विषमं घोरं विषं तेन विह्वलः मूर्च्छितः । अत एव स्मरणशक्तिलोपसंभावनेति भावः । आत्मानं स्मरेदात्मनः इतिकर्तव्यतां चिंतयेत् । अतो गृहमागत्य राज्यग्रहणेन पृथ्वीं सनाथां कुर्यादिति भावः । अनित्यतया सर्वभावानां क्षणभंगुरत्वेन जनितं उत्पादितं वैराग्यं विषयवैमुख्यं यस्य स तथोक्तो वा उपसर्पंतीं स्वयं समीपमुपगच्छंतीं राज्यलक्ष्मीं राजसंपदं निराकुर्यात् प्रत्यादिशेत् । दारुणेन दुःसहेन दुःखरूपेणाग्निना प्रज्वलितः संतप्तो देहो यस्य सोभिषेकं राज्याभिषेकं प्रतिपद्येत स्वीकुर्यात् । दाहदुःखशांतये जलावगाहनं युज्यत एवेति व्यज्यते । अभिधीयमानः सनिर्बंधं राज्यग्रहणाय कथ्यमानः पराचीनं पराङ्मुखस्त्वं नाचरेत् । निपुणं पर्यालोच्य राज्यं गृह्णीयाद्वा । तात वत्स कांचनस्य सुवर्णस्य तालतरुरिव प्रांशु उन्नतं प्रमाणं यस्य तत् । दिवसकरप्रीत्या सूर्यभक्त्या । प्रभाकरवर्द्धनः सूर्योपासक आसीत् । दिवसं रात्रिंदिवमित्यर्थः । उन्मुखं प्रसादप्रवणं कमलपक्षे सर्वं सुगमं । वज्रस्य स्तंभौ इव भासुरौ दीप्तिमंतौ भुजौ कांडाविव भुजकांडौ हसितः उपहसितः तिरस्कृत इत्यर्थः । मदेनालसस्य मंथरस्य हलधरस्य बलभद्रस्य विभ्रमः शोभा यैस्ते तथोक्ताः । मदालसहलधरविभ्रमसदृशा इत्यर्थः । मानी अभिमानधनः । विक्रांतः पराक्रमी । वदान्यो दानशौण्डः दर्शनाय उत्सुकं उत्कंठितं हृदयं यस्य सः अतिष्ठत् राजधान्यामेव कालं गमयामासेत्यर्थः ।

कथमपि—कपाटविघटनादिमहाक्लेशालब्धप्रवेशः ।

कन्दर्प &c.–कंदर्पस्य मदनस्य सायकेन बाणेन प्रहारः आघातः तस्मात् परवशः पराधीनः तं तथोक्तं । At the end of this interval, his confidant, **मकरंद**, obtaining, with great difficulty, an access to him, expostulated with the love-sick कंदर्पकेतु.

सखे &c.—सखे वयस्य किमिदमसांप्रतं अनुचितं असाधुजनोचितं प्राकृतजनानुसरणीयं अध्वानं पंथानं व्यवहारमित्यर्थः आश्रितोसि।

तवैतच्चरितं &c.—संतः विवेकिनः तव प्रज्ञासत्वयोरतिभूमिः एतच्चरितं अवस्थांतरगतमीदृशं ते चेष्टितमालोक्य वितर्कदोलासु संशयदोलासु । निवसंति संशयिता भवंतीति भावः।

खलाः &c—खलाः दुर्जनाः पुनस्तदनिर्वाच्यमनिष्टमनभिमतमेवावधारयंति निश्चिन्वंति । अनिष्टोद्भावनेऽनभिमत प्रकाशने यो रसः अनुरागः तदुत्तरं प्रधानं यस्य तादृक् । अस्य खलस्य ।

तथाहि&c—भीमोऽपि युधिष्ठिरानुजोपि वकद्वेषी बकद्वेष्टा न इति विरोधः। भीमो भयानकोऽपि न बकान् स्तुत्यान् द्वेष्टि तादृक् । अपि चार्थे । इत्यविरोधः । आश्रयाशो वह्निरपि मातरिश्वा वायुरितिविरोधः। आश्रयमश्नाति तादृशः । यमाश्रयति तस्यैव भक्षकः इत्यर्थः । मातरि जनन्यां तत्सदृशे पोषके । श्वा कुकुरः । अनुचिताचरणत्वात्तत्सदृश इति भावः इत्यविरोधः।

अतिकटुरपि &c.—अतिकटुर्महारसः । अतिकटोर्महारसत्वं विरोधः अतिकटुरतिकटुप्रकृतिर्महांश्चासावरसश्चेति महारसः। सर्षपस्नेह इव करयुगुललालितोपि शिरसा धृतोपि पादप्रणामादिना। पक्षे,अधिकरण्यस्य करणत्वेन वर्णनं । शिरसि धृतोपि कटुत्वं न जहाति।

तालफलरस इव &c.—तालफलरस इवापातमधुरो भोजनप्रारंभ एव मधुरः परिणामविरसस्तिक्तश्च । पक्षे । पातो दोषस्तमभिव्याप्यापातं मधुरं । हिताभासाचरणेन मधुरः । परिणामे दोषज्ञानोत्तरं विरस उदासीनः । तिक्तः प्रतिजनं मर्मप्रकाशकः। पादपराग इव चरणरेणुरिवावधूतः क्षिप्तस्तिरस्कृतश्च । मूर्धानं शिरः कषाययति धूवरयति पीडयाति च । विषतरुप्रसव इव यथा यथानुभूयते सेव्यते तथा तथा मोहमेव मूर्च्छां वैचित्यं वा दृढयति स्थिरीकरोति।

नीचदेशस्येव &c. नीचदेशस्येव निम्नभूभागस्येव वारिविरहो जलविरहो न जायते। पक्षे। अव्ययानामनेकार्थत्वाद्वा शब्द एवार्थे । न वा नैवास्य खलस्यारिविरहः शत्रुविरहो जायते सर्वनाशोद्यतत्वादिति भावः ।

निदाघदिवस इव &c— ग्रीष्मर्तुदिवस इव बहुमत्सरो बहुमाक्षिकः। सुमनसां पुष्पाणां तापं वहति - पक्षे । बहुमत्सरो बहुमात्सर्यवान् क्रोधी वा। सुमनसां शुद्धांतःकरणानां ।

अन्धकार इव &c—अन्धकार इव दोषा रात्रिस्तस्या अनुबंधे चतुरः।

विश्वकर्मा &c–विश्वकर्मादित्यस्तस्या वलोपनमस्तमनं तत्रोद्यतः । पक्षे । दोषस्यानुबन्ध आरोपे चतुरः । विश्वेषां कर्म क्रिया तस्या अवलोपनं छेदनं तत्रोद्यतः ।

विरूपाक्षोपि &c–विरूपाक्षः शिवश्चक्रधरो विष्णुरिति विरोधः । विरूपाक्षो विषमव्यवहारः । चक्रधरो दंभभेदधरः ।

शक्राश्व इव &c–इंद्राश्व इवोच्चैः-श्रवा उच्चैःश्रवः संज्ञकः। न देशात् समुद्राज्जातस्तादृशश्चासौ प्रशंसावान् तथाभूतः । पक्षे । उच्चैः श्रवा बाधिरः । परकीयकार्यश्रवणे देशजान् प्रशंसितुं शीलमस्य तादृशो न भवति तथाविधः ।

शरस्येव &c. दध्यग्रभागस्येव विभिन्नस्यापि संगतस्यापि सतः साधोर्विद्यमानस्य च स्नेहमनुरागं चैक्कण्यं दर्शयतोपि तक्राट इव मंथान इव हृदयं विलोडयति ।

यक्षबलिरिव &c. यक्षबलिरिवात्मघोषेण काकेन मुखरः काकशब्देन सशब्दः । मंडलभ्रमणं कुक्कुरभ्रमणं तत्कथकस्तत्सूचकः । पक्षे । आत्मघोषेणात्मस्तुत्या मुखरः । मंडले देशादौ भ्रमणं तत्कथकः ।

मत्तमातंग इव &c. स्ववशायां निजकरिण्यामालोलं मुखं यस्य सः । अधरीकृतदानः । मदजलस्यातिवर्षणादधरीकरणं । पक्षे । सुष्ठुवसमवाच्यवाचित्वादालोलं मुखं यस्य सः । अधरीकृतं दानं । वितरणं येन ।

वृषभ इव &c. सुरभेर्गोर्यानेन गमनेन विकलो विह्वलस्तदनुधावनेन वा विह्वलः। पक्षे । सुरभिया देवभयेन न विकलः ।

कामीव &c. कामीव गोत्रस्खलनं नामस्खलनं तेन विधुरः । वामानां स्त्रीणामध्वा मार्गस्तत्रानुरक्तः । पक्षे । गोत्रस्खलनं वंशजस्खलनं । वामाध्वा विपरिताचरणं ।

अजीर्णविकार इव &c.–कलेवरे शरीरे वचासि वचने मांदिमानमावहति । पक्षे । कले अव्यक्तमधुरे वरे श्रेष्ठे वचसि वचने मंदिमानमावहाति वाचाट इति भावः ।

वंचक इव &c.–शृगाल इव श्वेव वा कटपले मृतमांसे रक्तः । विभावर्यां रात्रौ रक्तश्च । पक्षे । कटे समयबंधे पलः प्रतारणं तस्मिन् रक्तः । शपथपूर्वकप्रतारक इति भावः ।

परेत इव &c.–बन्धुताया बन्धुसमूहस्यावगतं दर्शनं यस्य । पक्षे । बंधून् तापयति तादृशं दर्शनं यस्य ।

परशुरिव &c. भद्राश्रियं चंदनं खण्डयति । पक्षे । भद्रं कल्याणं । श्रियं लक्ष्मीं । यद्वा । भद्रश्रियं साधुसंपदं ।

कुद्दाल इव &c.–दलिता गोत्रा पृथ्वी येन । क्षमां पृथ्वीं भजंति तादृशान् प्राणिनो वृक्षादीन् नि-

कृंतति छिनत्ति । वृक्षादीनां प्राणित्वं "भक्षेरहिंसार्थस्य न" इति वार्तिके आकरे स्पष्टं । कुदळ इति भाषायां । पक्षे । दलितगोत्रो नाशितवंशजः क्षमाभाजः शांतियुतान् प्राणिनो मनुष्यान् ।

रतकील इव &c.—कुक्कुर इव जघन्यकर्मलग्नो मार्ग एव सुरतादौ प्रवृत्तः । ह्रेपयति साधुन् । पक्षे । जघन्यकर्म नीचकर्म ।

दुष्टशूर्पश्रुतिरिव &c. दुष्टगज इव कानने वने रुचिर्यस्य । अनुगतं । ततं विस्तृतं । यवसं तृणं । नानुमोदते । पक्षे । केषदानरुचिर्वैदनकांतिर्यस्य । लोकानां धिक्कारात् हीनकांतिरिति भावः । अनुगतमपि वयसं दक्षं ततं वीणादिवाद्यं च नानुमोदते ।

अबीजादेव &c —खलव्यसनांकुरा अबीजादेवाकारणादेव जायंते । अकाण्डा देवाप्रस्तावादेव प्ररोहंति । अत एव दुरुच्छेदा भवंति । यो हि बीजाज्जायते काण्डात् स्कंधात् प्ररोहति स सुच्छेदो भवति मूर्तत्वादिति भावः ।

असतां &c. असतां हृदि प्रविष्टा दोषलवः करालायते भयावहो भवति । सतां हृदि तु न विशत्येव । दोषलव इति शेषः पूर्वोत्तरयोरपि । यदि कदाचिद्विशति । पारद इव क्षणमात्रमपि नावतिष्ठते । हृदय इति शेषः ।

साधवः मृगा इव &c.—साधवः संतो मृगा इव हरिणा इव विनोदविदोर्विनोदवेदितुर्मृगरमणपटोः पुंसः श्रवणेनाकर्णनेन वशगा भवंति । पक्षे । विनोदविदोर्ज्ञातुः । श्रवणेन समुपदेशश्रवणेन वशगास्तदधीनास्तादृशाः शरत्समया इव भवादृशा जनाः सुखं जनयंति । पिण्डीमित्यादौ भक्षणादिक्रियाक्षेपवत् सुखमित्यनेन जननक्रियाक्षेपः । अत एव मित्रस्य हृदयं हरंति । पक्षान्तरे । शरत्समयाः सुखंजनाः शोभनाः खंजनाः येषु तादृशाः । सचेतना मित्रस्येति शेषः । विसदृशमयोग्यं नोपादिशंति । अचेतनानामपि मैत्री समुचितपक्षे योग्यपक्षे निक्षिप्ता तर्हि सचेतनमैत्र्याः का कथेति भावः । समानशीलव्यसनेषु सख्यमितीममर्थं द्योतयन्नुभयसाधारणानि विशेषणान्याह ।

तथा हि &c.—माधुर्यशैत्यशुचित्वसंतापशांतिभिर्गुणैः पयो जलं पय इव दुग्धमिवेति मित्रतामुपगतस्य तत्संगाद्दुग्धसंगाद्वर्धितस्य बहुमूल्यतामापन्नस्य पुरः पूर्वं ममैव क्षयो युक्त इति विचार्य वारिणा क्षीयते ।

तदितं &c. तत् तस्मादिदं आचरितं असांप्रतमयुक्तं । सखे साधुजनोचितमध्वानं व्यवहारं गृहाण । साधवो हि दिङ्मोहात्परं केवलमुत्पथप्रवृत्ता उन्मार्गप्रवृत्ता भवंति

न त्वसव्यवहार इत्यर्थः । इत्यादि तस्मिन् मकरंदे वदति सति । स्मरशरनिकरप्रहारपरवशः कामबाणव्यथाव्याकुलः । कथमपि महाक्लेशात्परिमिताक्षरमुवाच ।
वयस्य &c. वयस्य सखे चित्तवृत्तिर्दितिरिव दैत्यजननीव शतमन्युनेन्द्रेण समाकुला व्याकुला भवतिपक्षे । शतसंख्याका मन्यवस्तैः समाकुला । शाकपार्थिवादिः । दितेर्गर्भनाशाय दितिप्रमादात् दितिगर्भे प्रविष्टः शक्रः एकं गर्भं सप्तधा विभज्य सप्तधा विभक्तं प्रातिव्यक्ति सप्तधा बभंजेति । त एवोन पंचाशद्वाता बभूवुरिति पुराणे प्रसिद्धं ।
रामतीर्थे–एतन्नाम्निक्षेत्रे ।
काननावनौ–अरण्यभुवि ।
वनितया–योषिता ।
उज्ज्वलाकारं–दीप्तिमच्छरीरं ।
आयासेन–कष्टेन ।
स्थविरे–वृद्धे ।
कालयवन–By this term probably Zanzibar or the coast of Arabia is meant.
धनाढ्यो धनसमृद्धः ।
वैश्यवरः–वणिक्श्रेष्ठः ।
मंत्रिसंभवो मंत्रिणः पुत्रः ।
भ्रांतभूवलयः–भ्रांतं भुवो वलयं चक्रं येनेति तथा ।
व्यवहारी–वाणिज्यकर्ता ।
उपयम्य–विवाहं कृत्वा ।

सुवस्तुसंपदा–शोभनवस्तुसमृध्या ।
संमानितः पूजितः सत्कृत इति यावत् ।
नतांगी–नतानि अवनम्राणि अंगानि यस्यास्तथा ।
प्रवहणं–नावम् ।
कल्लोलमालिकाभिहतः–कल्लोला महातरंगाः तेषां मालिकाः परंपराः ताभिरभिहतस्ताडितः ।
पोतः–नौः ।
गर्भभरालसां–गर्भस्य भरो भारस्तेनालसां जडां ।
धात्रीभावेन–उपमातृत्वेन ।
परां काष्ठां–अतिशयं ।
विचेतना–निःसंज्ञा । नष्टचेष्टेत्यर्थः ।
विजने–निर्जने ।
विवशा–विह्वला । विकलेत्यर्थः ।
वन्य *adj*. Wild.
वारण *m*. An elephant.
निपात्य–प्रच्याव्य ।
लता व्रततिः । गुल्मकेऽप्रकाण्डे ।
कवलं–ग्रासं ।
कण्ठीरवः–सिंहः ।
महाग्रहेण–महतावेशेन ।
फलेतरतया– Because (he found that the child was) not a fruit.
वितते विस्तृते स्कन्धस्य प्रकाण्डस्य मूले ।
सकलक्लेशसहेन––अखिलक्लेशसाहिष्णुना ।

एकदैव—एकस्मिन्नेव काले । सममित्यर्थः ।
उदंतं—वार्ताम् ।
उरसि दधति—लालयंती ।
निद्रामुद्रितां—निमीलितनेत्रां ।
यक्षकांता—A Yaksha-woman.
अंभोनिधिः समुद्रः स एव वलयः कटकस्तेन वेष्टितं क्षोणीमंडलं तस्येश्वर ईशिता तस्य ।
भाविनो नाद्यापि भूतस्य ।
परिचर्या—शुश्रूषा ।
स्वक्षी—शोभननयना ।
रंजितानि मित्राणि येन तं ।

---

TARANGA 18.

[ Sentimental verses, Ràma's grief for Sítá. ]

अयं कथं स्यादिति बाष्पगर्भमालोकयमानो वनदेवताभिः ।
विलोकयन् केवलपर्णशालां विलीनचेता विललाप रामः ॥ १ ॥

हा कष्टमत्र नहि सा किमिदं प्रवृत्त-
मालोकयामि चटुलामिह पादमुद्रां ।
मां वीक्ष्य नूनमगृहीतमृगं मुहूर्त-
मंतर्हिता तरुषु रोषवतीव सीता ॥ २ ॥

त्वदभिलषितपूर्त्यै वंचितः पंचवव्या-
मचरमचरमोऽहं मोहभाजां प्रजानाम् ।
तदिह सरलबुद्धे नैष रोषस्य कालः
सुमुखि मम मुखं किं सोढसीतावियोगं ॥ ३ ॥

यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि
चांद्रं हरामि हरिणं मम सन्निधेहि ।
यावन्न मुंचसि मया हृतमेणमेनं
तावद्दधातु तव वक्त्रतुलां मृगांकः ॥ ४ ॥

सप्राणाचेज्जनकतनया किं न तिष्ठेत मह्यं

हिंस्रैः सत्वैर्न किल विहता रक्तसिक्ता न भूमिः ।
गोदावर्याः पुलिनविहृतिं रामशून्या न कुर्यात्
युक्तं नक्तंचरकवलनात् संस्थिता सर्वथा सा ॥ ५ ॥

लोकान्तरप्रणयिनं श्वशुरं प्रणन्तु-
माज्ञप्तकालमतिलंघ्य यदि प्रयासि ।
विज्ञाप्य मामपि समाहूय साध्वि तस्मै
सौमित्रिरेव भरते निदधातु राज्यं ॥ ६ ॥

इत्थं विलप्य दयितां विपिने विचिन्वन्
रामो न तत्र धृतिमान्न च लक्ष्मणोपि ।
तादृग्विधामपि दशां कथयन् स्ववाचा
वल्मीकजन्ममुनिरेव कठोरचेताः ॥ ७ ॥

## रामं प्रति ताराप्रलपनं ।

कारुण्यं निरवधि यत्तव प्रसिद्धं
शीतांशोः सहजमिवार्तिहारि शैत्यं ।
तत्सर्वं मनुकुलनाथ रम्यकीर्ते
मत्पापात् कथय कथं त्वया निरस्तं ॥ ८ ॥

एवं विधे प्रियतमेप्यनपेतजीवां मां राक्षसीति रघुपुंगव साधु बुध्वा ।
बाणं विमुंच मयि संप्रति ताटकारे श्रेयो भवेद्दयितसंगमकारिणस्ते॥
साधारणी क्षितिभुजां मृगयेति पूर्वमुक्तं त्वयैव जनसंसदि सत्यवादिन्
शाखामृगीं तदिह मारय मां शरेण को नाम राम मृगयुर्दयते मृगीणां
संत्रस्य पूर्वममुतस्तव बंधुरेष भेजे यथाद्रिमकुतोभयमृश्यमूकं ।
भर्ता ममायमपि रामशरैरभेद्यं प्राप्तो मदीयहृदयस्थलमद्रिदुर्गं ॥

नाहं सुकेतुतनया न च सप्तसाली
वाली न च त्रिभुवनप्रथितप्रभावः ।
तारास्मि वज्रहृदया विशिखैरभेद्या
धन्वी कथं भवसि राघव मामविध्वा ॥ १२ ॥

क्षितिपतितनयानां हंत गर्भेश्वराणां
किमु निरवधि मौग्ध्यं शौर्यवज्जन्मसिद्धं
मम हृदि निरपाये वर्तमाने कपींद्रे
रघुवर यदमुष्मै तिष्ठसे चापपाणिः ॥ १३ ॥

श्रीलक्ष्मणः—चंपूरामायणं ।

गणदासः—

पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ १४ ॥

गणदासः—

शिष्टा क्रिया कस्यचिदात्मसंस्था संक्रातिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥ १५ ॥

प्रथमोंकः

परिव्राजिका:—

अंगैरंत्नर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्ताद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ १६ ॥

द्वितीयोंकः

राजा:—

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखं ।
असमग्रलक्ष्यकेसरमुच्छ्वसादिव पंकजं दृष्टम् ॥ १७ ॥

राजाः— कालिदासः—मालविकाग्निमित्रं—तृतीयांकः

नवजलधरः संनद्धोयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरंपरा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ १८॥

राजाः—

पश्चात्सरः प्रति गमिष्यसि मानसं तत्
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मां तावदुद्धर शुचो दयिताप्रवृत्त्या
स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ १९ ॥

राजा:—

तरंगभ्रूभंगा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भाशिथिलम् ।
पदा विद्धं यान्ती स्खलितमभिसंधाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ॥ २० ॥

राजाः— चतुर्थांकः

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितातपरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोयम् ॥ २१ ॥

कालिदासः—विक्रमोर्वशीयं—पंचमांकः

काश्यपः—

यास्यत्यद्य शकुंतलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ २२ ॥

राजाः— चतुर्थोंकः

अस्मात्परं बत यथाश्रुति सम्भृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २३ ॥

राजाः— षष्ठोंकः

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अंकाश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ २४ ॥

राजाः— सप्तमोंकः

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवम्प्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशंकया ॥ २५ ॥

कालिदासः—अभिज्ञानशाकुंतलं—सप्तमोंकः

राजाः—

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय ।

सद्यःपतन्मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥ २६ ॥

राजाः—

प्राणाः परित्यजत काममदाक्षिणं मां
रे दक्षिणा भवत मद्वचनं शृणुध्वम् ।
शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥ २७ ॥

श्रीहर्षः--रत्नावली--चतुर्थोंकः

राजाः—

हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता
रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।
चक्राह्वोहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे
संजाताः सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥२८॥

द्वितीयोंकः

सांकृत्यायनीः—

आभाति रत्नशतशोभितशातकुम्भ-
स्तम्भावसक्तपृथुमौक्तिकदामरम्यम् ।
अध्यासितं युवतिभिर्विजिताप्सरोभिः
प्रेक्षागृहं सुरविमानसमानमेतत् ॥ २९ ॥

तृतीयोंकः

राजाः—

संजात सान्द्रमकरन्दरसां क्रमेण
पातुं गतश्च कलिकां कमलस्य भृंगः ।
दग्धा निपत्य सहसैव हिमेन चैषा
वामे विधौ नहि फलन्त्यभिवाञ्छितानि ॥ ३० ॥

श्रीहर्ष—प्रियदर्शिका—चतुर्थोंकः

चाणक्यः—

आस्वादितद्विरदशोणितशोणशोभां
संध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ ३१ ॥

प्रथमोऽङ्कः

राक्षसः—

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं पापे मौर्यं यदसि कुलहीनं वृतवती ।
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ३२ ॥

द्वितीयोऽङ्कः

विराधगुप्तः—

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ ३३ ॥

द्वितीयोऽङ्कः

राजा:—

भर्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथंचिदवतार्य तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिंधुपतिं प्रसन्नाम् ॥ ३४ ॥

तृतीयोऽङ्कः

कंचुकीः—

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥३५॥

विशाखदत्तः—मुद्राराक्षसं—तृतीयोंकः

नारदः—

आदाय चापमधिरोपितषट्पदज्यं
तस्मिन्हिमाचलमुपेयुषि पंचबाणे
वेलातिलंघि किमपि प्रणयातिरेकात्
द्वंद्वानि लौल्यमभजंत विमोहितानि ॥ ३६ ॥

नारदः—

चूताः कोरकिता विनापि सुदृशां हस्तांबुजामर्शना-
त्तत्पादांबुजताडनैरपि विना कंकेलयः पुष्पिताः
तत्संगीतकमंतरेण हासिता रम्याः प्रियालद्रुमा ।
मुक्त्वा तद्वदनासवं मुकुलिता गंधोत्तराः केसराः ॥ ३७ ॥

महेंद्रः—

संचारिणीव वल्ली विद्युल्लतिकेव चापलोन्मुक्ता ।
मोहनकलेव मूर्ता कास्विदियं कमलपत्राक्षी ॥ ३८ ॥

वैतालिकः—

आधूय प्रणयं विवस्वति गते देशांतरे पद्मिनी
सोढुं तस्य वियोगमक्षमतया म्लायत्सरोजानना ।
संध्यावल्कलिनी द्विरेफपरिषद्रुद्राक्षमालावती

तत्प्राप्तिस्पृहयेव संप्रति तपःसक्ता समालक्ष्यते ॥ ३९ ॥

बाणः—पार्वतीपरिणयं—तृतीयोंकः

महामात्यः—

क्रूराः केसरिणस्तुषारशिखरिद्रोणीषु संशेरते
नागेन्द्रा अपि संचरन्ति विकटे विन्ध्याटवीकोटरे ।
धत्तेऽसौ भुजगेश्वरोऽपि धरणिं पातालमूलेवस-
न्प्रायः पौरुषभूषणा नयविदो जातु प्रमाद्यन्ति न ॥ ४० ॥

प्रथमोंकः

अक्रूरः—

असारे संसारे विषविषमपाके नृपसुखे
कृतान्तेनाक्रान्ते प्रकृतिचपले जीवितबले ।
ध्रुवापाये काये विषयमृगतृष्णाहृतहृदः
परप्राणैः प्राणानहह परिपुष्णन्ति कुधियः ॥ ४१ ॥

अक्रूरः—

राजाराधनतत्परेण सहसा स्वीकुर्वता शासनं
कृत्याकृत्यविचारवञ्चितधिया धर्मोऽपि नापेक्षितः
स्पृष्टा नैव घृणा तृणाय च मतो लोकस्त्रपाप्युज्झिता
धिक्कुक्षिंभरिणा मयाद्य कृपणाः प्राणाः परं पोषिताः ॥ ४२ ॥

शेषकृष्णः—कंसवधं—तृतीयोंकः

( नेपथ्ये ):—

द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैः ।
ज्योत्स्नापानमदालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूडमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः ।
प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् ॥ ४३ ॥

भिन्दानः सुंदरीणां पतिषु रुषमयं हर्म्यपारावतेभ्यः।
वाचालत्वं ददानः कचयितृषु गुणं प्रातिभं संदधानः।
प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांसुतल्पा-
दावेगादुत्थितानां नरवरकरिणां शृंखलाशिंजितेन ॥ ४४ ॥

राजशेखरः—विद्धशालभंजिका—प्रथमोंकः

विदुरः--

तत्रोत्सर्पिणि राजसूयसमये राज्ञः पृथाजन्मनो
द्वीपेशैर्विनयान्वितैरुपाचितं चित्रैर्महाप्राभृतैः।
प्रत्यक्षीकृतवान्यदस्मि विभवं कोषाधिकारे स्थित-
स्तेनाद्यापि निरौषधो मनसि मे दाहज्वरो वर्तते ॥ ४५ ॥

विकर्णः—

अस्मिन्महासदसि कौरवपाण्डवीये
क्षोभं गते द्रुपदजाचिकुराञ्चनाभिः।
दुर्योधनेन भृकुटी कुटिलीकृता च
जाताश्च भूमिपतयो लिखिता इवैते ॥ ४६ ॥

राजशेखरः—बालभारतं—द्वितीयोंकः

दशरथः—

कच्चित्कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि।
कर्तुं वा कच्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तु-
र्यत्संप्राप्तोऽसि किं वा रघुकुलतपसामीदृशोऽयं विवर्तः ॥४७॥

शिष्यः-- प्रथमोंकः

जाताः पक्कपलांडुपांडुमधुरच्छायाकिरस्तारकाः
प्राचीमंकुरयन्ति किंचन रुचो राजीवजीवातवः।

लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चंद्रमाः ॥ ४८ ॥

मुरारिः—अनर्घराघवं—द्वितीयोंकः ।

चारुदत्तः—

दारिद्र्यात्पुरुषस्य बांधवजनो वाक्ये न संतिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपिकृतं तत्तस्य संभाव्यते ॥ ४९ ॥

संगं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्
संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ५० ॥

दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिंता क गमिष्यासि त्वम् ॥ ५१ ॥

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यं ।
अल्पक्लेशं मरणं दारिद्र्यमनंतकं दुःखम् ॥ ५२ ॥

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ ५३ ॥

सत्यं न मे विभवनाशकृतास्ति चिंता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य ।

यत्सौहृदादपि जनाः शिथिलीभवन्ति । ५४ ॥
दारिद्र्याद्ध्रीयमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदं ॥५५॥
निवासश्चिन्ताया परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥५६॥
शूद्रकः—मृच्छकटिकं—प्रथमोंकः

अश्वत्थामाः—

महाप्रलयमारुतक्षुभितपुष्करावर्तक—
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः प्लवः ॥ ५७ ॥
दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ५८ ॥

कृपः—

धिक् सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन् विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया

द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ ५९ ॥

अश्वत्थामा:--

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं शममास्थितस्य ।
तातस्य मे पलितमौलिनिमीलिताक्षे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ ६० ॥

भट्टनारायणः—वेणीसंहरणं—तृतीयोंकः

नारदः—

यत्पारे विरजं विराजि परमव्योमेति यद्गीयते
नित्यं चिन्मयभूमिचिन्मयलताकुञ्जादिभिर्मञ्जुलम् ।
सान्द्रानन्दमहोमयैः खगमृगव्रातैर्वृतं सर्वत-
स्तद्वृन्दावनमीक्ष्यते किमपरं सम्भाव्यमक्ष्णोः फलम्॥६१॥

स्नातकः--

विततिरपि गिरीणां मुञ्चतीवाश्रुधाराम्
पलकयति तरूणां वीरुधाञ्चैष वर्गम् ।
विदधति सरितोऽपि स्रोतसः स्तम्भमुच्चै-
र्हरि हरि हरिवंशीनाद एवोज्जिहीते ॥ ६२ ॥

कविकर्णपूरः—चैतन्यचंद्रोदयं--तृतीयोंकः

( नेपथ्ये ध्रुवा गीयते. )

कुर्वन्कोपादुदञ्चद्रविकिरणसटापाटलैर्दृष्टिपातै-
रद्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।
तीव्रैर्निश्वासपातैः पुनरपि भुवनोत्पातमासूचयाद्भि-
र्गर्जन्मौर्वीकचापस्त्रिभुवनविजयी जामदग्न्यः समेति ॥६३॥

जामदग्न्यः—

यस्योद्यद्घोरधाराञ्चलदलितगलद्बाहुशाखासहस्र-
प्रोद्गच्छद्रक्तधारानिवहजितनवोन्मीलदर्कांशुजालः ।
क्ष्मापालः कार्तवीर्यः सुरपुरसदृशां पुष्पिताशोकशाखि-
भ्रान्ति दत्त्वापि चित्ते निजपुरसदृशां शोकशाखी बभूव॥१४॥

जयदेवः—प्रसन्नराघवं—चतुर्थोंकः

जामदग्न्यः—

यत्क्षात्रियेष्वपि पुनः स्थितमाधिपत्यं
तैरेव संप्रति धृतानि पुनर्धनूंषि ।
उन्माद्यतां भुजबलेन मयापि कष्ट-
मुच्छृंखलानि चरितानि पुनः श्रुतानि ॥ ६५ ॥

जामदग्न्यः—

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ६६ ॥

जामदग्न्यः—

प्रहर नमय चापं प्राक्प्रहारप्रियोऽहं
मयि तु कृतनिघाते किं विदध्याः परेण ।
घगितिविततवह्निद्गारभास्वत्कुठार-
प्रविघटितकठोरस्कन्धबन्धः कबन्धः ॥ ६७ ॥

द्वितीयोंकः

रामः—

न्यक्कारो हृदि वज्रकील इव मे तीव्रं परिस्पन्दते
घोरेऽन्धे तमसीव मज्जति मनः संमीलितं लज्जया ।

शोकस्तातविपत्तिजो दहति मां नास्त्येव यस्मिन्क्रिया ।
मर्माणीह पुनर्भिनत्ति करुणा सीतां वराकीं प्रति ॥ ६८ ॥

भवभूतिः—महावीरचरितं—पंचमोंकः

कामंदकी:—

बहिःसर्वाकारप्रगुणरमणीयं व्यवहर-
न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमभिसंधाय कपटै-
स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ ६९ ॥

माधवः—

संतापसंततिमहाव्यसनाथ तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वंकषा भगवती भवितव्यतैव ॥ ७० ॥

मकरन्दः—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतंगस्योदये पुण्डरीकं ।
द्रवति च हिमरश्मावुद्गते चंद्रकान्तः ॥ ७१ ॥

माधवः—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोप्यन्तर्जडयति च तापं च कुरुते ॥ ७२ ॥

परिच्छेदव्यक्तिर्भवति न पुरःस्थेपि विषये ।
भवत्यभ्यस्तेपि स्मरणमतथाभावविरसम् ।
न संतापच्छेदो हिमसरसि वा चंद्रमसि वा ।
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ ७३ ॥

भवभूतिः—मालतीमाधवं—प्रथमोंकः

रामः—

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीविततरोः परितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ७४ ॥

तमसाः—

अन्तःकरणतत्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ ७५ ॥
पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ ७६ ॥

रामः—

दलतिहृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ७७ ॥
आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपराविधं तनोति मोहम् ॥ ७८ ॥

तमथा:—

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरंगमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् ॥ ७९ ॥

भवभूतिः—उत्तरचरितं—तृतीयोंकः

Notes and Meanings.

अयं कथं स्याद् &c.—अयं रामः संप्रति कथं वर्तेत, सीतया विनेति शेषः । देव्या देवयजनसंभवायाः विरहादस्य दाशरथेः कीदृग्विचेष्टितं भवेदिति भावः ।

बाष्पगर्भं *adv.* Having the interior filled with tears, full of tears, streaming with tears. सबाष्पं ।

वनदेवता *f.* Sylvan deity, a forest goddess, Dryad.

विलीनचेताः—With low spirits, with drooping mind, with dejected heart.

चटुलां—सुंदरां, शोभनां ।

पादमुद्रा *f.* A foot-print.

त्वदभिलषितपूर्त्यै—In order to fulfil thy wished for-object.

अचरमः—Not last *i. e.* first. प्रथमः ।

सरलबुद्धिः *f.* Of sincere mind, of artless mind, simple-hearted.

रोष *m.* Anger,

सोढः सीतायाः वियोगः यस्य तत् ।

चांद्रं हरिणं हरामि—I will take away the figure of the deer marked on the surface of the moon.

एण *m.* Deer.

तावन्मृगांकस्तव वक्त्रतुलां दधातु—Let the moon enjoy the equality with thy face till then.

पुलिनविहृति *f.* Sports on the sand-banks of a river.

नक्तंचर *m.* A night-roaming demon.

कवलन *m. n.* A mouthful.

संस्थित *adj.* Dead, deceased.

मह्यं किं न तिष्ठेत–Why should she not wait for me. स्था *conj.* I. P. and in some special significations also, *Atm.* Ep. P. A.

सर्वथा *adv.* In all probabili-

ties.

लोकांतरप्रणयिनं—Feeling affection for you though he lives in another world.

प्रणंतु *inf*. To prostrate, to salute, to bow to.

आज्ञप्तकालमतिलंघ्य यदि प्रयासि- If you go ( for ever ) notwithstanding the proper time, that is assigned to your death. If you die untimely.

हे साध्वि, तस्मै श्वशुराय विज्ञाप्य मामापि समाह्वय—O virtuous lady, requesting thy father-in-law do thou call me thither.

वल्मीकजन्ममुनिः—वाल्मीकिः ।

कारुण्य *n*. Compassion, kindness, tenderness.

निरवधि *adj*. Without bounds or boundaries, unlimited.

सहज *adj*. Natural.

आर्तिहारिन् *adj*. Destroying pain.

मनुकुलनाथ--मनोरिक्ष्वाकुजनकस्य कुलं वंशः तस्य नाथः श्रेष्ठः तत्संबुद्धिः । रघुकुलवंशावतंसस्य रामभद्रस्येदं विशेषणं । रम्या शोभना कीर्तिः यशः यस्य सः तत्संबुद्धिः रम्यकीर्ते ।

अनपेतजीवां–Whose breath is not gone off, not past, not separated ; possessed of breath.

दयितसंगमकारिणः— Effecting or bringing about the union or meeting of my husband.

साधारणी *f*. Applicable to many, common to many, general, universal, common.

शाखामृगी *f*. A monkey, an ape.

हे राम को नाम मृगयुः मृगीणां दयते—O Ráma, what huntsman, I should like to know, is going to take pity on female deer or does. "अधीगर्थदयेशां कर्मणि" Verbs implying 'to have mastery over,' 'to control,' 'to rule,' like ईश्, भू with प्र; दय् to pity, to have compassion on, and words implying 'remembering' (with regret), 'to think of,' like स्मृ, इ with अधि, govern the object of these actions in the Genitive case.

अमुतः *ind*. From this place from that place, from this

or that.

भेजे &c. Resorted or repaired to the mountain ऋश्यमूक, not threatened from any quarters.

भेत्तुमशक्यं अभेद्यं ।

प्राप्त: &c. Repaired to the mountain-fort built on the surface of my heart.

सुकेतुतनया—ताडका ।

सप्तसाली—सप्तानां सालानां समाहार:—A group of seven Sal-trees, said to be cut off by Ráma with one stroke of an arrow.

त्रिभुवनप्रथितप्रभाव:— Whose might or prowess was known to the three worlds.

विशिख m. A sharp arrow.

मामविध्वा Ger. Without killing me.

गर्भेश्वराणां क्षितिपतितनयानां शौर्यवज्जन्मासिद्धं मौग्ध्यं हंत किमु निरवधि । यत् मम निरपाये हृदि कर्पान्द्रे वर्तमाने सति हे राघव अमुष्मै वालिने चापपाणि: सन् तिष्ठसे इत्यन्वय: ।

निरपाय *adj.* Imperishable. Free from destruction or decay; eternal, infalible; free from harm or evil.

पात्राविशेषन्यस्तं—Put in a costly vessel *i. e.* imparted to a distinguished pupil.

गुणांतरं व्रजति—Assumes a different quality *i. e.* becomes a thing quite different from its original nature.

शिल्प *n.* Skill, art, instruction.

आधातृ *m.* A teacher.

समुद्रशुक्ति *f.* A sea-shell.

शिष्टा *f.* Excellent, well, distinguished.

क्रिया *f.* Education, learning; composition.

आत्मनि संस्था यस्या सा; कस्यचिदध्यापकस्य आत्मसंस्था स्वनिष्ठा क्रिया अभिनयादिव्यापार: शिष्टा विशिष्टा उत्तरत्र विशेषयुक्तेति दर्शनात् तथार्थत्वं । अन्यस्य कस्यचित् संक्रांति: स्वशिक्षिते शिष्ये क्रियासंक्रम: प्रतिफलनं विशेषयुक्ता विशिष्टा यस्याध्यापकस्योभयं स्वगता शिष्यसंक्रांतिश्चेत्युभयं एतयोर्द्वयं साधु शोभनं, स शिक्षकाणां धुरि अग्रे प्रतिष्ठापयितव्य: सर्वशिक्षकाग्रगण्यत्वेन स्वीकार्य इत्यर्थ: ।

संक्रांति *f.* Transference, imparting, teaching.

यस्योभयं—He of whom both is execllent should be ap-

pointed at the head of the teachers.

अंगैरन्तर् &c – अंतर्निहितवचनैः वचनमंतरेणापि विक्षेपविशेषेण अंतर्गतवचनैरंगैरर्थैः अभिनेयपदार्थैः सम्यक् सूचितः। पादन्यासः पादविक्षेपो लयं मानं तालसाम्यमिति यावत् । अनुगतः अनुसृतः रसेषु अभिनेयगतरसेषु तदाविर्भावव्यंजनाय तन्मयत्वं तत्स्वरूपत्वमस्या इति शेषः । शाखायोनिः शाखातुल्यपाणिरेव योनिरुत्पत्तिसाधनं यस्य हस्ताश्रित इत्यर्थः । अभिनयः मृदुः स्वल्पः । तद्विकल्पानुवृत्तौ तस्य अभिनेयनायकादेः विकल्प्यंते इति विकल्पाः देहादिचेष्टादयस्तेषामनुवृत्तौ अनुसरणे भावस्तद्गतोऽवस्थाभेदः स एव अभिनेयनायकादिगत एव रागबन्धः अनुरागसंबंधः विषयादन्यस्मादिति शेषः । भावं हृदयं नुदति प्रचोदयाति अर्थादाकर्षति विषयांतरसंसर्गराहित्येन स्वप्रवणं करोतीत्यर्थः ।

स्मयमानं &c.–आयताक्ष्याः विशालनेत्रायाः मालविकायाः उच्छ्वसत् प्रकाशमानं असमग्रं यथा तथा लक्ष्यं केशरं यस्य तादृशं पंकजं पद्ममिव किंचिदभिव्यक्तेन दशनेन दंतेन शोभि, स्मयमानं ईषत् हसत् मुखं दृष्टम् ।

नवजलधरः &c.–संनद्धः संनाहवानयं पुरोवर्ती नवजलधरः नूतनमेघः एव । दृप्तः उद्धतः स चासौ निशाचरश्च स न भवति । दूराकृष्टं इदं पुरोवर्ति सुरधनुरिन्द्रायुधमेव । शरासनं कार्मुकं न भवति नाम । नामेति संभावनायाम् । पटुस्तीव्रः अयं पुरोवर्त्यपि धारासारः धारासंपात एव । बाणपरंपरा न भवति । कनकस्य सुवर्णस्य निकषा घृष्टरेखा तद्वत् स्निग्धा रुचिरा इयं पुरोवर्तिनी च तडित्सौदामिन्येव । मम प्रियोर्वशी न भवति ।

दूराकृष्ट–greatly bent.

संनद्धः–girded in armour.

अयमपि पटुः &c.–This thing here too that is so sharp is a shower of rain, not a volley of arrows, and this thing here that is as bright as a line of gold on a touch stone is the lightning, not my dear उर्वशी.

पश्चात्सरः &c. Thou shalt go to the lake मानस presently; throw away that lotus-stalk, the provision for thy journey; thou shalt have it again; meanwhile save me from sorrow by giving me some news of my beloved one. For in the esti-

mation of the good, service to the supplicant is more important than their own affairs.

पाथेयं बिसमुत्सृज–for the bird cannot with the stalk in its beak speak so as to give the king the news he wants–तावत् meanwhile, before going.

स्वार्थात् &c. To the good the business of a petitioner is more important and not their own affairs.

उद्धुर–The figure implied is taken from the state of a man that is being drowned in water

तरंगभ्रूभंगा &c.–Having the waves for the broken eye-brows, the series of frightened birds for the jingling zone, collecting the foam like the garment disordered through hurry, and going on foot much interruptedly owing to the thought of my fault–this one here is surely that offended उर्वशी transformed into the river. The sense is that the river with its waves gently flowing one after another seemed to resemble उर्वशी who when in anger would have her eye-brows gently and slowly raised up in frown.

आश्वासितस्य &c. Scarcely am I comforted by the obtaining of a son when I instantly, O delicate one, experience the separation from thee &c. नाम–mark the force of this particle, which is that 'the सुतोपलब्धेराश्वासनं has only just commenced," has commenced yet, as it were, only in *name* and not yet begun to be enjoyed, when'. It is this feeling of want of son that is impliedly compared to the आतपरुज्, the सुतोपलब्धेराश्वासनं to प्रथमाभ्रवृष्टि ( the dropping in a shower of the first rain-cloud after the end of the burning hot season ) and the विप्रयोग to the stroke of lightning that suddenly and almost immediately after the shower falls upon the tree.

यास्यत्यद्य &c. This very day will शकुन्तला depart, at such a thought, my heart is smitten with melancholy suppressing the flow of tears; my sight is paralysed by anxious thought. So great indeed through affection is the mental agitation even of me a hermit. How much more then, are householders afflicted by new pangs at separation from their daughters.

अस्मात्परं &c. Who, alas! after this man, in our family, will offer us the oblations prepared according to scriptural precept? in all probability &c.

धौतानि गलितानि अश्रूणि बाष्पाणि एव शेषः यस्य तत् *cf.* त्वगस्थिशेषः Having nothing left but skin and bone. नामशेषः Having nothing surviving but a name.

आलक्ष्य &c. Happy ( those parents who), carrying their little- sons fondly soliciting–a-refuge-in-their-lap, having- buds-of -teeth-just-visible by their innocent smiles, while attempting-charming--prattle--in-indistinct- accents; are soiled by the dust of their limbs.

सुतनु &c. O fair one! let the unpleasant-feeling of my repudiation of thee depart from thy heart. Somehow or other at that time the infatuation of my mind was strong. For such, for the most part is the behaviour of those over whom ( the quality of)-darkness-has-the–mastery, on happy–occasions. A blind man shakes off even the garland thrown on his head suspecting it to be a snake.

व्यलीकं विप्रियं, किमपि अनिर्वचनीयरूपं यथा स्यात्तथा, तदा प्रत्यादेशकाले, प्रबलतमसां प्रबलम- ज्ञानं येषां ते तथोक्ताः, शुभेषु सत्कर्मसु, वृत्तयः व्यवहाराः, धुनोति निरस्यति। भर्तुः प्राणिपतने भरतः "काकुभिः प्राणिपातैश्च भाग्यनिंदादिभिस्तथा एवं कृते च नारीणां पुरुषोतिप्रियो भवेत्"।

अंभोजगर्भ &c.—Whose body is delicate like the interior

of a lotus ( lit. water born).
कण्ठग्रह *m.* An embrace.
प्रथमः आदिमश्चासौ रागः प्रेमबन्धनं च तेन घनः सांद्रस्तस्मिन् कण्ठग्रहे ।
विलीय *Ger*. Having melted.
सद्यः पतन्—Quickly falling or dropping, frail. Construe with हृदयं.
मदनमार्गणरन्ध्रमार्गैः— By the way through the aperture made by the arrows of Madana.
कामं *ind.* Granted.
अदक्षिण *adj.* Cruel, ruthless.
दक्षिणाः—सरलाः ।
पद्मवनद्युति–Having taken away the beauty or the splendour of the lotus-forest.
दिनश्रीः–The beanty of the day.
राग–Seemes to have used in the double sense. It means love and redness.
चक्राह्वः—रथांगनामा, चक्रवाकः ।
सहचरी *f.* A mate.
नलिनी *f.* A pond in which totuses grow.
बिम्ब— Disc.
अन्धकार—Used here as an adjective.

प्रेक्षागृह *n.* प्रेक्षागार *m. n.* A play-house, a theatre.
आभाति &c. This play-house looks beautiful or pleasing on accouut of the garlands of big pearls hung over the golden pillars set with ( lit. made splendid by ) the innumerable jewels.
अध्यासित *adj.* Occupied, युवति—young women. अप्सरस्–the nymphs of the Svarga सुरविमान— a palace of gods.
संजात &c. The bee in his course proceeded to lick the bud of the lotus-flower laden with thick honey produced ( in the interior of the lotus-flower).
वामे विधौ &c When the fate is adverse nothing that one desires bears fruit.
दुग्धा–हिमेन—The phrase हिमेन दग्धा would appear either strange or impossible. Every sentence should have आकांक्षा, योग्यता, संनिधि &c, to make its sense complete. The example of योग्यता विरह as stated by

अन्नंभट्ट in his तर्कसंग्रहदीपिका is 'वह्निना सिंचेदिति न प्रमाणं योग्यताविरहात्. So at first sight this sentence wants, it appears, in योग्यता. It is nevertheless a fact and an undoubted one. Cold produces the same effect as heat on plants, trees, foliage, flowers &c and above the Gháts it is a common saying 'हिंवानें शेत करपलें.' Because crops and the plants do present a scorched appearance.

आस्वादित &c. Having subdued him who can wish to pluck out the tusk of a lion? brilliant by reason of the crimson colour of the blood of an elephant (only lately) davoured, like the digit of the moon red at the time of twilight &c.

स्फुरंती *f* Flashing.

जृंभा *f*. Yawning, gaping.

को नाम–इति राक्षसस्य साहसिकत्वदुःसाध्यसाधकत्वादयो गुणाः सूचिताः ।

हरेर्दंष्ट्रां–इति मौर्यश्रियो दुष्प्रापत्वं सूचितं ।

आस्वादित–इति अचिरकृतनंदवंशवधरोषोऽद्यापि न शांत इति सूचितं ।

संध्यारुणचन्द्रकलादृष्टांतेन मौर्यश्रीरभिनवा वर्द्धिष्णुर्विश्वाभिनंद्येति च सूचितं ।

जृंभाविदारितमुखस्य–इति स्वस्यास्मिन्विषयेऽतिजागरूकता ध्वनिता ।

स्फुरंतीं–इति समग्रांगतया लक्ष्म्या वैरिदुःसाध्यत्वमुक्तं । एवं जाग्रतोऽपि मम पौरुषं परिभूय अवज्ञाय मौर्यलक्ष्मीं हर्तुं यतत इति अहो अतिशूरो दंडनीतिपारदृश्वा स्वामिकार्यधुर्यो राक्षसोऽवश्यं संग्राह्य इति चाणक्योत्सुक्यमात्ररूपा बीजस्यारंभावस्थाऽर्थतः सूचिता ।

प्रथितकुलज *adj*. Born of a noble family, of a noble descent.

प्रथितकुलजा भूमिपतयः पृथिव्यां दग्धाः कि॰ यद् (यस्मात्कारणात्) हे पापे त्वं कुलहीनं मौर्यपतिं वृतवती असि इत्यन्वयः ।

कुलहीन *scil*, he being a वृषल.

प्रकृत्या &c. Or rather, the intellect of women, agile or sprightly like the upper ends of the flower sprung from काश grass, is, as rule, apposed to the wisdom resulting from the

( excellent ) qualities of men.

किं शेषस्य &c.–That the शेष does not throw off the earth–is it because the burden of it does not afflict his body? Or that the sun does not sit down unmoved–is it because he is not fatigued? Not so. But a praiseworthy man is ashamed to throw up, like a wretched helpless man, what he has taken charge of.

निर्व्यूढ–Completed, carried to a proper end. कृपणवत् नीचवत्, कुलव्रतं–कुलधर्मः, A family-vow.

भर्तुः &c. बहुवल्लभस्येति हेतुगर्भविशेषणं । बहुवल्लभत्वादिव कलुषितामिति कालुष्यहेतूत्प्रेक्षा । सा च वाचकाभावाद्गम्या । वर्षात्ययेन कृशीभवंतीं स्वच्छसलिलां गंगां भर्तुः समुद्रस्य मार्गे पथि कथंचिदवतार्य शरत् सिंधुपतिं उदधिं नयति । अत्रोपमा । रतिकथाचतुरा दूतीवेति दूतीदृष्टांतानुरोधान्नायकापराधकुपितां विरहकृशां नायिकां प्रसादमुखीं कृत्वा नायकं प्रति यथा चतुरदूती वातिगभीरा चाणक्यनीतिः सागरवदतिगभीराशयं चन्द्रगुप्तं सर्वात्मना सर्वप्रकारेण प्रापयतीति रूपकातिशयोक्त्या सूचितं ।

कलुषिता f. Offended, whose jealousy is roused.

सर्वात्मना—Should be construed with प्रसन्नां, and interpreted to mean completely pleased, or reconciled to her lord the ocean. As applied to the river, the sense is that the water becomes quite clear, the mud and detritus being no longer mixed with the water in the शरद् season. *Cf.* भावावबोधकलुषा दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव । रघु. ।

लब्धप्रसादा विटाः– Voluptuous companions who have obtained the favour of the king.

उन्मुख &c. Looking upwards as in case of entreaty, and concealments, *scil.* of his own feelings, I think, not of the king's secrets as the commentator takes it.

पिण्ड–Food, sustenance. लाघवकारिणी— Degrading,

humiliating, कृतधियः—men of refined intelligence, wise men.

श्ववृत्ति *f.* The life of a dog; condition of a dog; service, servitude (which a Bràhma*n*a ought not to engage in).

आदाय &c. —When काम came to the mountain हिमाचल, with his bow to which the string made of bees is fixed &c.

प्रणयातिरेकात्– Through the excess of love.

विमोहित *adj.* Smitten द्रुंद्वानि-ज्ञोपुष्पयुग्मानि ।

चूताः—Even without the touch of the lotus-like-hands of beautiful women, the mango trees burst into blossoms; the कंकेलि trees (अशोक) put forth flowers without receiving the kick from their lotus-like-feet; the प्रियाल trees began to laugh (*i. e.* were laden with sprouts) without having heard their music &c.

संचारिणीव &c. As if a moving creeper.

चापलोन्मुक्ता विद्युल्लतिकेव–As if a flash of lightning that has left off the natural swiftness.

मोहनकला *f.* A practical art that has the power of fascinating. मूर्ता in bodily form.

संध्यावल्कलिनी *f.* Wearing a matted dress made of twilight.

द्विरेफ &c. Putting on the neck a garland of रुद्राक्ष made of multitudes of bees.

म्लायत्सरोजानना— Whose lotus-like-face is fast fading.

तुषारशिखरिद्रोणीषु–The formidable lions lie on a tub beneath the pointed tops of the water-sprouts.

विकटे विन्ध्याटवीकोटरे–The large elephants too roam over the frightful caves of the विन्ध्य mountain.

भुजगेश्वर *m.* The king of the serpents,–शेषः ।

प्रायः &c Generally men skilled in polity and who look upon valour as their ornament, do not at all

err (from duty ).
विषविषमपाके-विषमेव विषमः दुःखदः अर्थात्क्लेशरूपः पाकः परिणामो यस्य तादृशे ।
कृतांतेनाक्रान्ते कृतांतेन पूर्वजन्माचरितेन कर्मणा, यद्वा दैवविलसितेन, यमेन वा आक्रांते अभिभूते ।
प्रकृतिचपले-निसर्गचापलत्वं विद्यते अस्य तादृशे ।
ध्रुवापाये-ध्रुवः निश्चयेन घटनीयः अपायो नाशरूपः यस्मिन् तादृशे ।
विषयाः--रूपरसगन्धशब्दप्रमदादयः मृगतृष्णाः भ्रांतिजनकानि मृगजलानि तैर्हृतं हृदयं येषां ते तथोक्ताः कुधियो दुर्जना परप्राणैः परेषां अन्येषां प्राणैः असुभिः स्वप्राणान् अहह पुष्णंति वर्धन्ते किल । परप्राणापव्ययेन स्वशरीराणि पुष्यंति इति तात्पर्यार्थः। *Cf.* येऽमी मानवराक्षसाः परहितं स्वार्थाय निघ्नंति ये । ये तु घ्नांति निरर्थकं परहितं ते के न जानीमहे । नीतीशतकं ।
राजाराधन &c.-राज्ञः आराधनं तस्मिन् तत्परेण नृपसेवैकबुद्धिना सहसा तत्क्षणं शीघ्रमिति यावत् । शासनं आज्ञां स्वीकुर्वता अंगीकुर्वता मयेतिशेषः । कृत्यं च अकृत्यं च कृत्याकृत्यं तस्मिन् यो विचारः तेन वंचिता विप्रलब्धा धीर्यस्य सः तेन तथोक्तेन । इदं करणीयं इदं चाकरणीयं इत्येवं विषये यो विचारस्तारतम्यज्ञानं तस्मिन् वंचितधिया । धर्मोऽपि नापेक्षितः नादृतः नोपार्जित इति यावत् । घृणा भूतानुकंपा नैव स्पृष्टा । न कदापि भूतानुकंपया हृदयं द्रवीभूतमित्यर्थः । लोकश्च जनः तृणाय मतः धिक्कृतः तृणवत्तुच्छीकृत इति यावत् । त्रपा जनलज्जा उज्झिता परित्यक्ता । अतो धिङ्मां यत् कुक्षिभरिणा उदरंभरिणा मयाद्य कृपणाः दुर्जाता मे प्राणाः परं चिरं पोषिता पुष्टिं नीताः किल ।
द्वित्रैर्व्योम्नि &c. Two or three stars having a color of old pearls, have remained in the sky. The चकोर females, with their bodies languid from (or on account of ) intoxication caused by drinking moonbeams, have gone to sleep. The moon having the color ( or appearance or complexion) of a bee-hive devoid of honey ), has repaired ( or has gone ) to the summit of the western mountain ; and the eastern quarter has become the recipient (or holder) of the lustre of the eyes of the young cats. *i. e.*

has a colour resembling that of the lustre in the eyes of the young cats, or resembles in colour the eyes of the young cats. *Cf.* यात्येकतोस्तशिखरं पतिरोषधीनां। आविष्कृतारुणपुरःसरमेकतोऽर्कः। &c. शाकुंतलं।

भिन्दानः सुंदरीणां &c. Moreover, the morning trumpet-sound deepened by the tinkling (gingling noise) of the chains of the royal elephants hastily got up from their (spacious) bed of dust, pervades the sky removing ( lit. breaking ) the anger of the women towards their husbands ( or lovers ), setting the pegions in the mansion a chattering and inspiring ( or imparting or infusing) in the poets the quality of brilliant ( or bright, or vivid ) conception ( or imagination.

प्रातिभं–That quick state of mind which grasps difficulties and tries to remove them. प्रातस्त्याः compare अत्रत्याः, कुत्रत्याः, तत्रत्याः &c. here the termination त्या gives the sense of belonging or pertaining to a definite place or spot.

राजसूयसमये उत्सर्पिणि सति-when the time of celebrating राजसूय sacrifice was moving or gliding upwards or fleeting away.

पृथाजन्मन् *m.* Born of पृथा, son of पृथा.

द्वीपेश *m.* Lord of continent or island *i.e.* feudatory prince.

उपचित *adj.* Collected, gathered.

चित्र *adj* Various, different; excellent, distinguished; wonderful, surprising.

महाप्राभृत *adj.* With rich or munificient presents, with large gifts or donations.

तेनाद्यापि &c. The inflammatory fever sprung from that and having no cure for it, is still burning in my heart.

अस्मिन्महासदसि &c. When this great assembly composed of the Kauravas and Pàndavas was enraged at (seeing) the curling–braid–of-hair of द्रौपदी held by दुर्योधन, the

kings appeared as if drawn in a picture with their eye-brows bent in a curve &c.
कच्चित्कांतारभाजां &c. कच्चित्कथय कांतारभाजां महारण्यवासिनां कोऽपि शौवापदः श्वापदकृतः परिभवोऽभिभवो भवति यस्माद्धेतोः संप्राप्तोसीति सर्वत्र प्रश्ने योज्यं। यद्वा, कांतारभाजां दुर्गवर्त्मसेविनाम्। दस्यूनामिति यावत्। परिभवोभिभवः कोऽप्यनिर्वचनीयोऽस्ति। शौवापदो वाभिभवोऽस्ति। अथ वा क्रतूनां यज्ञानां प्रत्यूहेन विघ्नेन मखभुजो देवा हवींषि हवनीयद्रव्यं घृतादि न खलु भुंजते न वा भक्षयंति खलु। जिज्ञासामाह। अयं न खलुशब्दो वितर्के वा। वसुमती पृथ्वी दक्षिणा यस्य तादृशः सप्ततंतुर्यज्ञो वान्तर्मनासि वर्तते। किमर्थमित्यपेक्षायामाह—कर्तुमिति। अत्र कर्तुमित्यस्यापेक्षया यज्ञस्य यद्यपि कर्मत्वं तथा चानभिहिते कर्मणि द्वितीयायां सप्ततंतुमिति युज्यते। तथापि वर्ततीति प्रधानक्रियया प्रथमसंबंधात्तदपेक्षया यज्ञस्य कर्तृत्वेऽभिहिते कर्तरि प्रथमैव भवति। प्रधानक्रियान्वयस्याभ्यर्हितत्वादित्यत्रधेयं। तथा च आचार्यकारिकाप्यत्र—"यदेवोक्तं विशेष्येण तिङा वा यदि वा कृता। विशेषणक्रियानुक्तमप्युक्तं तद्भवेदिति"। आनीय गुरुः पूज्यते, आमंत्र्य ब्राह्मणो भोज्यते इत्यस्योदाहरणं। पृथ्वी दक्षिणं यज्ञं वा कर्तुं मनो वलते इति तात्पर्यं। किं वा न परिभवः, न वा क्रतुप्रत्यूहः, न वा यज्ञारंभः, किं च रघुवंशतपस्सामीदृशः परिणामोयत्त्वमस्मद्गृहमागतोसीति भावः।

जाताः &c.—पक्वो• यः पलाण्डुः 'कान्दा' इति प्रसिद्धस्तद्वत्पाण्डुधूसरा मधुरा मनोहरा च या कांतिस्तत्क्षेपिकास्तारका जाता वृत्ताः। किंचन रुचः किंचिद्दीप्तयः प्राचीं पूर्वां दिशमंकुरयन्त्युद्भेदयंति। अंकुरयुक्तां कुर्वन्तीत्यर्थः। यद्वा किं चापि चेत्यर्थः। रुचो दीप्तयः पूर्वां दिशं नांकुरवतीं कुर्वन्ति। तथा चाद्याप्यरुणोदयो न वृत्तः इत्यर्थः। कीदृश्यः। राजीवानां पद्मानां जीवातवो जीवनौषधानि। आदित्यसंबंधिन्य इत्यर्थः। कींचनशब्दोऽव्ययं किंचिदर्थे। चन्द्रमा इतोऽम्बरतलादाकाशात्। गत्वेति शेषः। अस्ताचलमस्तपर्वतं चुम्बत्यालिंगाति। 'चुबि वक्त्रसंयोगे' इति वक्त्रपदमुपलक्षणं। 'अंगारचुम्बितमिव व्यथमानमास्ते' इति भवभूतिप्रयोगदर्शनात्। तलं स्वरूपं। यद्वाम्बरतलादितो गतश्चुम्बति। लूता मर्कटकृमिः। मर्कटसूत्रविस्तारवद्वर्तुलं बिम्बं मण्डलं दधत्। प्रोषितरोचिः। अपगततेजा इत्यर्थः।

वाक्ये न संतिष्ठते—Disregard his request. वाक्यं न प्रतिपालयतीत्यर्थः ।

स्फारीभवंति—Grow extensive, increase, विस्तृता भवंति ।

पापं कर्म &c.—The wicked action even if it be perpetrated by others, is indubitably attributed to him. तत्कर्म तस्य दरिद्रस्य संभाव्यते दरिद्रतया इदमनेनैव कृतमिति निश्चीयते अनुमीयते वा, नाकार्यमस्ति दरिद्राणामिति भावः।

आदरान्न संभाष्यते—None talks to him with respect.

सावज्ञमालोक्यते—He is looked upon with contempt.

दूरादेव &c. With unfashionable dress (to cover his body) he shuns, from a distance, the meeting of great men through shame.

महापातकं—महापातकं नाम पातित्यजनकपापविशेषः । तच्च पंचविधं यदुक्तं मनुना, 'ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः । महांति पातकान्याहुः संसर्गश्चापि तैः सह इति । दारिद्र्यं तु तदतिरिक्ततया षष्ठत्वेन परिगणितं।

सुहृदिति—सुहृदयं मम बन्धुरिति मनसि कृत्येत्यर्थः । विपन्नदेहे, मृते ।

अल्पक्लेशं—अल्पः क्लेशो दुःखं यस्मिन् तत् । मरणस्याल्पक्षणस्थायित्वादल्पक्लेशप्रदत्वं । दारिद्र्यस्य तु जीवनकालव्यापित्वादनन्तदुःखप्रदत्वं ज्ञेयं ।

एतत्तु मां दहति—My friend, my affliction does not proced from want of money; but this thing particularly consumes my body, that the guests leave this house of mine under the impression that the wealth has departed from it-क्षीणार्थं धनरहितं इति बुध्वा अतिथयः न विद्यते तिथिर्द्वितीया येषां ते, एकदिनमात्रस्थायिन इत्यर्थः । अत्र तिथिशब्दो दिनपरः । अस्मदीयं गृहं यत्परिवर्जयन्ति परित्यजान्यत्र गच्छंति । यदिति क्रियाविशेषणं । कालात्यये मदक्षरणसमयापगमे धनलाभसमयापगमे च ।

सत्यं न मे &c.—विभवनाशकृता धनक्षयजनिता मे मम चिंता सत्यं नास्ति। सत्यमिति क्रियाविशेषणं । कुत इत्यत आह । भाग्येति । भाग्यक्रमेण अदृष्टवशेनैव धनानि भवंति यांति च । धनस्य सत्वासत्वयोः पुरुषस्य शुभाशुभादृष्टहेतुकतया तन्नाशे कापि चिंता नैव कर्तव्येति भावः । तर्हि का चिंतेत्यत आह एतदिति । नष्टं धनं यस्य तादृश आश्रय आलयो यस्य

सः निर्धन इत्यर्थः । तथाभूतस्य लोकस्येति शेषः । सौहृदात् मैत्रीतोऽपि जना यत् शिथिलीभवन्ति विमुखा भवन्ति एतत्तु एतदेव मां दहति तापयति । निर्धनजनेन सह जातामपि मैत्रीं प्रयोजनाभावात् सर्वे परित्यजन्तीत्यर्थः।

दारिद्र्याद्धियमेति—ह्रियं लज्जां । निस्तेजास्तेजोहीनः परिभूयते यावत्तावत् कारणेन लोकैर्निर्भयं तिरस्क्रियते । निर्वेदं स्वावमाननं ! शुचं शोकं मानापगमाद् वृथा मे जीवनमित्याकाररूपां । शोकापिहितः शोकेन दुःखेन पिहित आच्छादितः अभिभूत इति यावत्, बुध्या विवेकशक्त्या परित्यज्यते । निर्बुद्धिर्जनः क्षयं नाशमेति प्राप्नोति । बुद्धिनाशात्प्रणश्यतीति गीतोक्तेः । अत एव निधनता निर्धनता सर्वासामापदां लज्जादीनामास्पदं स्थानं । अहो इति खेदे अव्ययं ।

निवासः &c. चिंतायाः कथं मे निर्वाहः स्यादित्येवंरूपाया निवासः । परस्य परिभवः परपरिभवः परकर्तृकपरिभव इत्यर्थः । परोऽधिकः परिभवो वा, अविश्वास्यतयेति भावः । मित्राणां जुगुप्सा प्रत्युपकरणेऽसमर्थत्वादिति भावः । स्वजना बन्धवः । जना अपरे लोकाश्च,तेषां विद्वेषस्य करणं कृतिः। बान्धवादयोऽपि दरिद्रं द्विषन्तीत्यर्थः । सति दारिद्र्ये वनं गुंतुं बुद्धिरिच्छा भवति, यतः कलत्रात् भार्यातोऽपि परिभवो भवति । भार्यापि वसनाभरणादिकमप्राप्य तिरस्करोतीत्यर्थः । एतच्च वनगमनेच्छायां हेतुः ।

महाप्रलय &c. महाप्रलयस्य प्रलयकालस्य मारुतेन वायुना क्षुभितौ चालितौ आलोडितौ पुष्करावर्तकौ तन्नामानौ प्रलयकालस्य मेघौ तयोः प्रचण्डं भयंकरं घनं निबिडं गंभीरं गर्जितं शब्दः तस्य प्रतिरवः प्रतिध्वनिस्तस्यानुकरोतिं यः सोऽनुकारी सदृशः श्रवणयोः कर्णयोः भैरवः भयंकरः स्थगितः आच्छादितः पूरितः रोदस्योः द्यावापृथिव्योः कन्दरो गह्वरं अन्तरालस्थानं येन स रवः शब्दः श्रूयते इति शेषः । अद्यास्मिन् दिवसे समरोदधेः युद्धसागरस्य अयं अभूतपूर्वः पूर्वमभूतः प्लवः क्षोभः जलोच्छ्वासः प्रवाह इति यावत् कुतः कस्माद्भवतीति शेषः । अश्वत्थामाश्चेतसि इति विकल्पोऽजायत इति भावः ।

दग्धुं विश्वं &c. द्वादशार्काः द्वादशसूर्याः । ते च यथा । धाता, मित्रः, अर्यमा, रुद्रः, वरुणः, सूर्यः, भगः, विवस्वान्, पूषा, सविता, त्वष्टा, विष्णुः, । दहनाकिरणैः दाहकैः दहनसमर्थैः करैः विश्वं जगत् दग्धुं भस्मीकर्तुं नोदिताः ।

सप्तवाता वायवः सप्तधा भिन्नाः गुणिताः ऊनपंचाशत्प्रकाराः सन्तः दिशि दिशि प्रतिदिशं न वाता न ववुः । श्वसनः स्पर्शनो वायुरित्यादिनामानः ऊनपंचाशत्संख्यका वाताः हेमाद्रौ सलक्षणाः प्रदर्शिता इति । पुष्करः आवर्तकस्तौ आदी येषां तैः पुष्करावर्तकसंवर्तद्रोणाः प्रलयकाले मिलिता वर्षन्ति। " पुष्करावर्तकास्तेन कारणेनेह।वि श्रुताः । नानारूपधरास्ते तु महाघोरस्वनास्तथा । कल्पान्ते वृष्टिकर्तारः संवर्ताग्नेर्नियामकाः ” इति ब्रह्मांडपुराणे । मेघैर्गगनतलं आकाशमंडलं न छन्नं नावृत्तं । रे पापाः शौर्यराशेः शूरस्य मे मम पितुः पापमनिष्टं मरणं कथं कथयत । प्रलयं परिहाय मम तातस्य मरणमसंभवमिति ।

धिक् सानुजं &c. अनुजैर्भ्रातृभिः सह वर्तमानं कुरुपतिं दुर्योधनं धिक् । न जातः शत्रुर्यस्य तं अजातशत्रुं युधिष्ठिरं धिक् । भूपतीन् राज्ञः धिक् । विफलं शस्त्रं बिभ्रति ये तान् निष्फलशस्त्रधारिणोऽस्मान् धिक् अस्तु । यैः तदा तस्मिन् काले द्रुपदात्मजायाः द्रौपद्याः कृष्णायाः केशग्रहः अद्यास्मिन्नहनि द्रोणस्य केशग्रहः लिखितैश्चित्रार्पितैरिव वीक्षितौ दृष्टः । अन्यायनिवारणार्थाय शस्त्रग्रहणं, यैः शस्त्राणि गृहीत्वा तत् प्रत्यक्षीकृतमनेकशः अतस्तेषां शस्त्रग्रहणं निष्फलमेवेत्यर्थः ।

प्रत्यक्षमात्तधनुषां—आत्तानि गृहीतानि धनूंषि यैस्तेषां धनुर्धारिणां न निरस्त्राणां इत्यर्थः। एतेन तेषामुपेक्षणमनुचितं सूचितं । मनुजेश्वराणां राज्ञां नेतरेषां जनानां असमर्थानां उपेक्षा न दोषाय उत एतेषां दोषाय । प्रत्यक्षं समक्षं न तेषामगोचर इति सूचितं । प्राणान् त्यक्ष्यामीति निश्चित्याहारपरित्यागः प्रायस्तत्र उपवेशः प्रायोपवेशः प्राणत्यागाय अनशनव्रतमवलम्ब्यावस्थितिः तस्य सदृशं तुल्यं शमं शांतिं आस्थितस्य अवलम्ब्यावतिष्ठमानस्य नास्ति शस्त्रं पाणौ यस्य तस्य परित्यक्तास्त्रस्य । एतेन निरस्त्रजनहननरूपो दोष सूचितः। मे मम तातस्य जनकस्य पलिताः शुक्ला मौलयः केशाः यस्य तत् । निमीलिते अक्षिणी यस्य तत् तच्च तत् पलितमौलि निमीलिताक्षमिति कर्मधारयः तस्मिन् शिरसि मस्तके शस्त्रं व्यापारितं प्रयुक्तं ।

विरज *adj*. Free from dust.

विराज् *conj*. I P. A. To shine forth, shine out, glitter, to appear to advantage.

परमव्योमेति यद्गीयते—Which is sung as Supreme heaven.

नित्यं &c.— And which is constantly sung in rap-

turous *notes* or melodious *tunes* by the all-intelligence-land abounding with all-intelligence-plants, arbours and others.

सान्द्रानन्दमहामयै: &c.–Expl. And which is all-around surrounded with the multitudes of birds and beasts elate with great pleasure consequent on ecstatic joy.

वृन्द्रावन *n.* Name of the sacred place near गोकुल at the distance of ten miles from मथुरा.

अक्ष्णो: किमपरं फलं संभाव्यं—What other fruit than this is produced or effected or possible to the eyes.

विततिरपि &c. Even the expansion of the mountains sheds, as it were, the tear drops or shower of tears.

एष: (अयं व्रजराजकुमारस्य वंशीनिनाद:) तरूणां वीरुधां च वर्गे पलकयति—Yonder the sound of the flute of the son of the lord of the Vraja distinguishes the class of trees from that of the plants.

विदधाति &c. The rivers too hold high or upwards the suppression or arresting of the force of their currents.

कुर्वन् जामदग्न्य: कोपात् अद्यापि-क्षत्रकण्ठच्युतरुधिरसारिसिक्तधारं कुठारं कुर्वन् समेति—Here comes the son of जमदग्नि still making the edge of his axe red with blood-streams gushing out from the severed necks of the Kshatriyas through spite &c. उदंचत्–coming above the horizon, glowing. सटा–clotted hair. पाटल— red and white. तीव्र —Hard. उत्पात— Calamity. मौर्वी— Bow-string. गर्जती– Twanging. गर्जन्ती मौर्वी यस्य तादृशश्चापो यस्य स: qualifies जामदग्न्य:। At the end of the first compound क is added. त्रिभुवनविजयी–Conqueror of the three words.

यस्योद्यत् &c. यस्य refers to the axe. अञ्चल-End, border -दलित cut off, lopped.बाहुशाखा-Arms compared to so many

branches of trees. प्रोद्गच्छत्- Issuing. निवह- Collection, stream, current. जित- Rising. अर्कांशु—A collection of solar rays. क्ष्मापाल- Protector of the earth. सुरपुर-The city of the gods. सुदृश्— Women having beautiful eyes. अशोकशाखिन्- The अशोक tree. भ्रांति False, wrong, mistaken appearance, likeness. शोकशाखी- Mark the pun on the words शोकशाखी and अशोकशाखी in the previous line.

यत्क्षत्रियेष्वपि &c. यद् आधिपत्यं पृथिवीपालनरूपं प्रभुत्वं पुनरपि भूयोपि क्षत्रियेषु स्थितं आहितं। मया तु तेषां हस्तादाच्छिद्य कश्यपाय मही दत्तेत्याशयः। संप्रति साप्रतं तैरेव पुनः धनूंषि कार्मुकाणि धृतानि गृहीतानि। मया तु निःशेषीकृतास्ते इत्याशयः। कष्टं अहह मयापि पुनर्भुजबलेन उन्मायतां व्यभिचारिणां दृप्यतामिति यावत्। क्षत्रियाणां उच्छृंखलानि अनियंत्रितानि चरितानि आचरणानि श्रुतानि।

त्रातुं &c. लोकान् भुवनानि त्रातुं रक्षितुं परिणतः आविर्भूतः प्राप्त इति यावत् इव कायवान् मूर्तिमान् ब्रह्मवेदः धनुर्वेदः। ब्रह्मकोशस्य वेदरूपस्य भांडारस्य गुप्त्यै रक्षायै तनुं देहं श्रितः गृहीत इव क्षात्रो धर्मः क्षत्रियधर्मः। सामर्थ्यानां समुदयः समग्राः शक्तय इव अथवा गुणानां संचयः राशिः आविर्भूय प्रादुर्भूय स्थित इव जगतां पुण्यानां निर्मीयते अनेनेति निर्माणं सारः तस्य राशिः।

प्रहर &c.-प्रहर। चापं धनुर्नमय आकर्ष सज्जीकुर्वित्यर्थः। अहं प्राक्प्रहारस्य पूर्वघातस्य प्रियः। यद्वा पूर्वं प्रहारः ताडनं प्रियः यस्य सः तथोक्तः। मयि तु कृतनिघाते कृतप्रहारे 'धक्' 'धक् धक्' इति दाहशब्देन सह विततः विस्तृतः यो वह्न्युद्गारः वह्नेः अग्नेः उद्गारः उद्गमनं निष्क्रमणमिति यावत् तेन भास्वता दीप्तिमता कुठारेण परशुना प्रविघटितः विश्लेषितः विच्छिन्नः इत्यर्थः कठोरः कठिनः स्कन्धबन्धः स्कन्धयोरंसयोर्बन्धः सन्धिः कण्ठः इत्यर्थः यस्य तादृशः कबन्धः शिरःशून्यदेहः कबन्धमात्रावशिष्टः इत्यर्थः सन् त्वं परेण पश्चात् परतः इति यावत् किं विदध्याः कुर्याः। ममप्रहारानंतर तव प्रहारावसरो न भवितेति भावः।

न्यक्कारो हृदि &c. न्यक्कारः सीताहरणरूपावमानना परिभवः इति यावत् वज्रनिर्मितः कीलः शंकुः

इव मम हृदि हृदये तीव्रं तक्ष्णं परिस्पन्दते परिस्फुरति चरतीत्यर्थः। लज्जया व्रीडया संमीलितं संकुचितं किंकर्तव्यतामूढमिति भावः। मनः घोरे दारुणे अन्धे तमसि महान्धकारे मज्जाति निमग्नं भवति इव । यस्मिन् क्रिया प्रतिक्रिया प्रतिविधानोपायः इत्यर्थः । नास्ति तादृशः तातस्य दशरथस्य विपत्तिजः मरणजनितः शोकः मां दहति । वराकीं दीनां । करुणाव्यंजकोयं शद्बः। सीतां प्रति करुणा दया पुनः मम मर्माणि एव भिनत्ति विदारयति ।

बहिःसर्वाकार &c. Expl. A wise man behaving externally in an unobjectionable ( favourable) and consequently pleasant manner conceals even minute points, from which others may infer his thoughts, and deceiving all men by his schemes and looking unconcerned effects his own purpose and observes silence. सर्वाकारैः प्रगुणमत एव रमणीयं ।

संतापसंतति &c. Expl. My heart be comes, as it were, attached to her without having any regard to reason (regardless of any reason) in order to bring about a great calamity in the shape of series of affliction (continued sufferings). Generally the revered destiny that conquers every thing bestows good as well as evil on creatures.

व्यतिषजति &c. Expl. Some (indescribable or mysterious) internal cause or innate motive joins together (brings together ) objects, and affection does not at all depend on external circumstances ( *i. e.* outword qualities or superficial form ), for पुण्डरीक lotus blooms or expands at the rise of the sun, and the चन्द्रकान्त ( the moonstone) oozes ( becomes wet or streams) when the cold-rayed-moon appears.

परिच्छेदातीत &c.-Expl. Some mysterious perturbed mental change or affliction which is beyond discernment, which no words can sufficiently express, which never before in my life came within the range of my

experience and which became deep in cousequence of great infatuation enhanced by the destruction of sober reflection, stupifies and afflicts me at the same time.

परिच्छेदव्यक्ति:&c. Expl. I cannot clearly discern any object even that is before me; my remembrance is unpleasant on account of its unreality as regards things to which I have already become accustomed; my feverishness cannot be removed either in a cold lake or by the moon; and my mind devoid of fixity (attention on any particular object) wanders and is vacant (*i. e.* thinks about some useless aspirations). किमपि मनोरथमालिखति आलिंगति इत्यर्थः ।

प्रश्चयोतनं नु &c. Can this be a sprinkling of ambrosial dew from the leaves of the yellow sandle wood tree of Paradise (हरिचन्दनस्य तदाख्यस्य देवतरोः पल्लवानां किसलयानां प्रश्चयोतनं रसस्रावः निःसारितो रसः इति यावत्), can this be a shower of the essence extracted by bruising from the stream of rays emitted by the moon (निष्पीडितात् रसनिःसारणार्थं मर्दितात् इन्दुकरकन्दलात् चन्द्रकिरणकलापात् जायते इति तथोक्तः: निष्पीडितेभ्यः चन्द्रकिरणेभ्यो निःसृतेन रसेन निष्पन्नः इत्यर्थः), can this be a revivifying elixir poured over my heart gladdening the withered sapling of my life.

अन्तःकरण&c. Expl. What men call offspring is really the one bond of delight framed by the Creator to bind together, by being a resting place of affection, the heart, the internal principle of the two parents.

पूरोत्पीडे &c. Expl. For when the flood of a lake has swelled to the full, an emissary is a remedy; and in the agitation of sorrow the heart is supported by lamentation. परीवाहः जलनिर्गमः प्रतिक्रिया जलवृद्धिनिबन्धनसेतुभंगादिदोषप्रशमनोपायः ।

दलति हृदयं &c. Expl. My much agitated heart is bruised, but it is not riven asuder; my shattered frame suffers distraction, but does not lose its conscious mind; an inward burning inflames my body, but does not reduce it to ashes; destiny strikes me, piercing my vitals, but cuts not off my life. दलति निष्पिष्टं भवति। विकलः विवशः दुःसहशोकसंतापाभिभवेन निश्चेष्ट इत्यर्थः।

आलिम्पन् &c. Expl. This touch anointing as if with ambrosial unguents the internal or it may be the external elements of my body, though it brings me back to life, suddenly diffuses through my frame a numbness of a different kind arising from joy. आलिम्पन् साकल्येन लिप्तान् कुर्वन्। शरीरधातून् शरीरवर्तिनः धातुसंज्ञया निर्दिष्टान् त्वगस्थिमांसशोणितादीन् पदार्थान्।

एको रसः &c. Expl. The pathetic sentiment, though one in itself, being modified by various occasions, assumes different forms, as water assumes the various modifications of eddies, bubbles, and waves, in all of which it never ceases to be the same element. यथा जलस्य आवर्तादयो रूपभेदाः न पदार्थान्तराणि तथैव शोकस्य सीतायां लक्षिता हर्षविषादादयो भावा रूपभेदा एवेत्यर्थः।

---

## TARANGA 19.

[ The origin of the Yavanas &c. ]

अंबष्ठनिषादादिजातिवच्छकयवनचीनादिजातयोपि ब्राह्मणादिवर्णेभ्य एवोद्गता इत्यार्या मन्यन्ते। यथाह मनुर्दशमेऽध्याये। शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च। पौण्ड्रकाश्चोड्रद्रविडाः काम्बोजा यवनाः शकाः। पारदाः पह्लवाश्चीनाः किराता दरदाः खशा इ-

ति । मुखबाहूरुपज्जानां या लोके जातयो बाहिः । म्लेच्छवाचश्चार्यवाचस्ते सर्वे दस्यवः स्मृता इति च। इदमत्र विचारणीयं। राज्यादिलोभेन देशान्तरं प्रति संक्रान्तानां शकयवनादीनां भाषास्वरूपतारतम्यपरीक्षणे क्रियमाणे पितृमातृस्वसृभ्रातृदुहितृप्रभृतयोऽनेके गीर्वाणभाषाशब्दा अपभ्रष्टाः सन्तः स्वल्पयाऽनुपूर्व्या विभिन्नास्तत्तद्भाषासूपलभ्यन्ते । ततश्चानुमातुं शक्यते यथा सर्वेषामेषां कदाचित्समये मूलकुटुम्बमेकमेव भवितुमर्हतीति।तदेवमनुमितार्थस्योदाहृतमिदं मानववचनद्वयं संवादकमिति। तथा चातुर्वर्ण्यातिरिक्ताः सर्वा अपि मनुष्यजातयो व्यभिचारादिदोषसम्भवाः सामान्यतो वर्णसंकरपदेनाभ्यधीयन्त दशमेऽध्याये मनुना । व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्मणां च त्यागेन जायन्ते वर्णसङ्कराः इति । एवं च पृथिव्यां सर्वेपि मानवा आर्यकुलत एव समुद्भूताः परन्तु यैर्दुर्दैववशात् स्वकर्माणि तत्यजिरे तेषामार्यत्वं प्रलुप्तं बभूवेति ध्येयं । अत एव ब्राह्मणादय आर्यजना यत्र न निवसन्ति ते जनपदा निंदितेन कीकटादिशब्देन व्यपदिश्यन्ते वेदे यथा किं ते कृण्वन्ति कीकटेषु गाव इति । व्याख्यातश्चायं मन्त्रो नैरुक्तग्रन्थे षष्ठाध्यायस्य द्वात्रिंशे खण्डे यास्केन, किं ते कुर्वन्ति कीकटेषु गावः । कीकटा नाम देशोऽनार्यनिवासः कीकटाः किंकृताः किं क्रियाभिरिति प्रेप्सा वेति ।

अथार्यप्रजोत्पत्तेः कियान् कालः समतीयायेति चेन्नासौ कालनियमः परिच्छेत्तुं शक्यते । प्रत्यक्षादीनां प्रमाणानामनुपलम्भात् । अनुमानतोपि वर्षसंख्यां समधिगन्तुं सद्धेतुरन्वेषणीयः । सोपि न

कश्चिद्यथावस्थितो निर्दोषः प्रसरति वेदेऽपि हि ब्राह्मणानामार्य-पदव्यपदेश्यता श्रूयते तथा च ऋग्वेदे तृतीयाष्टकस्य षष्ठेऽध्याये। अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्यायेति । अत्र वामदेव-ऋषिर्निजतपोबलेन स्वात्मनि सर्वात्मतामनुभूय प्रोवाच, अहं प्र-जापतिरूपः आर्यायांगिरसे भूमिं दत्तवान् । अहमिन्द्ररूपः सन् दाशुषे हविर्दत्तवते मर्त्याय वृष्टिं दत्तवानिति तदर्थः । एवं च ऋग्वेदकालेपि आर्याणां प्रसिद्धत्वात्ततोपि पुरातनं किंचित्प्रमाण-मार्योत्पत्तिप्रदेशकं यद्युपलभ्येत तर्हि चिकीर्षितानुमानं सिध्येत्, तदेव तु नोपलभामहे ।

## रामानुजाचार्यस्येतिहासः ।

रामानुजाचार्यस्येतिहासः सम्प्रदायप्रदीपे प्रदर्शितो यथा । अस्ति कश्चित् द्रविडदेशे भूतपुरीनामको ग्रामो यः सम्प्रति प्रे-मधुलेत्यभिधीयते । तत्र निवसतः केशवाभिधविप्रस्य भार्यायां मतिनामिकायां रामानुजः समजनि । ततः शङ्करमतानुयायिना यादवनाम्ना मातुलेनाध्यापितोऽयं रामानुजोऽभिनववैष्णवसम्प्र-दायप्रवर्तको बभूव । अयमाचार्यो विष्णुस्वामिशिष्यसन्ताने गृहीतजन्मनो बिल्वमङ्गलस्य पश्चान्मध्वाचार्यस्य च पुरस्तात् समभवदिति ।

## मध्वाचार्यस्येतिहासः ।

विक्रमशककालस्य त्रयोदशे शतके मध्वाचार्यः समभवत् । गुर्जरधराधिपतेः कुमारपालाभिधस्य राज्ञो राज्यसमये सम्प्र-दायप्रदीपकृता मध्वाचार्यस्य समुद्भववर्णनात् । विक्रमार्कसम-

यात् प्रगतेषु ११९९ नवनवत्यधिकैकादशशतीमितेषु संवत्सरेषु कार्तिकशुक्लदशम्यां कुमारपालस्य राज्याभिषेको बभूवेति प्रबन्धचिन्तामणिग्रन्थे मेरुतुङ्गाचार्येण लिखितत्वाच्च ।

सम्प्रदायप्रदीपे मध्वाचार्यसम्प्रदायप्रवृत्तिकथा यथा । गुर्जरदेशे जयसिंहापरनामधेयस्य सिद्धराजस्यानन्तरं कुमारपालाभिधो राजा हेमचन्द्राभिधेन जैनाचार्येण जैनधर्मं ग्राहितः । ततः स्वीकृतधर्माभिमानेन स राजा स्वराष्ट्रवर्तिनीभिः प्रजाभिर्बलात्कारेण जैनधर्मं स्वीकारयामास । अथास्य राज्ञः काचित् प्रियवधूर्वैष्णवसंप्रदायवर्तिन्यासीत् । सा प्रत्यहं कदाचित्समयविशेषे निजभवनवायनं तिरोधानकटालंकृतमासेवमाना घण्टापथे संचरतः शुभ्रपटावगुण्ठितवपुषो जैनधर्मपुषो यतीन् बकानिवान्तःकुटिलान् बहिरुपदर्शितविनयसौजन्यान् समालोच्य सोद्वेगमिदं पद्यार्धं पठति स्म 'किं करोमि क्व गच्छामि को वेदानुद्धरिष्यतीति ' । अथैकदा गौडदेशीयो वेदप्रबोधनामा कश्चिद्विप्रो वाराणसीमागतः शुश्राव यथा गुर्जरदेशे जैनानामतीव प्राबल्यमभवदिति । ततः स भट्टाचार्यः केनचिद्विदुषा मित्रेण सह कुमारपालनरपते राजधानीमागत्य जैनमुनिवेषेण नगरचर्यावलोकनाय संचरमाणो राजवधूसौधसविधमाजगाम ।

ततस्तया राजवध्वा पठ्यमानं किं करोमि क्व गच्छामि को वेदानुद्धरिष्यतीति पद्यार्धं श्रुत्वा मन्द्रस्वरेणोदीरयामास । ' मा विषीद वरारोहे भट्टाचार्योऽस्ति भूतले ' इति । एतदाकर्ण्य तया समाहूतस्य भट्टाचार्यस्य संगतं बभूव । ततोऽचिरादेव प्रमा-

णवादयुक्तचानुभवदृष्टान्तैः स कुमारपालो भट्टाचार्येणोपदिष्टः पुनर्वैदिकमार्गमनुससार । तस्मिन्नेव काले कश्चिच्छंकराचार्यशिष्यवंशीय आचार्यो दक्षिणदेशे गोकर्णक्षेत्रमधिष्ठितो निजान् विद्वत्तमान् शिष्यानाज्ञापयामास । यथा भवन्तः श्रीमच्छंकराचार्यप्रतिष्ठापितं सनातनधर्मं समर्थयन्तः सर्वासु दिक्षु संचरतेति । एवमाज्ञप्तानां शिष्याणामन्यतमो मध्वाभिदः पण्डितो निजचेतसि विचारयामास यथाहं नव्यं कमपि संप्रदायं प्रवर्तयिष्यामीति । तादृशो मध्वाशयो गुर्वाज्ञाव्यतिक्रमादिभिर्लिंगैस्तदानीमेव कैश्चिदुन्नीतः । ततोऽसौ देशान्तरं गत्वा वैष्णवसंप्रदायं रामानुजसंप्रदायाद्भिन्नं समुद्भावितवान् । कालेन संप्राप्तप्रतिष्ठो भूत्वा दक्षिणदेशे उडुपीप्रश्नाभिधग्रामे स्वधर्मसंस्थापनां चक्रे इति ।

## वल्लभाचार्यमतदिग्दर्शनस्य ।

अथात्र वल्लभाचार्यमतं प्रदर्श्यते । कश्चिदांध्रदेशे कांकरवाभिधग्रामे निवसन् कृष्णयजुर्वेदीयापस्तम्बशाखाध्यायी लक्ष्मणभट्टनामा ब्राह्मण आसीत् । स कदाचित् निजपत्न्या सह वाराणसीं प्रतस्थे । तस्य पत्नी एलमागारनाम्नी मार्गे एव विक्रमार्कसमयात् शरवह्निबाणेन्दुमिते १५३५ संवत्सरे वैशाखकृष्णैकादश्यां पुत्रं प्रासूत । ततः प्रोक्तकाले कृतोपनयनोऽयं वल्लभाचार्यो विष्णुस्वामिमतानुसारेण पुष्टिमार्गापरनामधेयं वैष्णवसंप्रदायं प्रवर्तयामास ।

यज्ञेश्वरदीक्षितः—आर्यविद्यासुधाकरः ।

## चार्वाकदर्शनं ।

अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते । बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात् ।

दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्वप्राणिनस्तावत् । 'यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः । भस्मीभूतस्य देहस्य पुनरागमनं कुतः' । इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्तमाना एवानुभूयन्ते । अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् ।

तत्र पृथिव्यादीनि भूतानि चत्वारि तत्वानि । तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते । तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तच्चैतन्यविशिष्टदेह एवात्मा । देहातिरिक्त आत्मनि प्रमाणाभावात् । प्रत्यक्षैकप्रमाणवादितयानुमानादेरनङ्गीकारेण प्रामाण्याभावात् । अंगनालिंगनादिजन्यं सुखमेव पुरुषार्थः । न चास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् । अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान्सकण्टकान्मत्स्यानुपादत्ते । स यावदादेयं तावदादाय निवर्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति । स यावदादेयं तावदादाय निवर्तते । तस्माद्दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि

कश्चिद्भीरुर्दृष्टं सुखं त्यजेत्तर्हि स पशुवन्मूर्खो भवेत् । अत एव कण्टकादिजन्यं दुःखमेव नरकम् । लोकसिद्धो राजा परमेश्वरः । देहोच्छेदो मोक्षः । देहात्मवादे च कृशोऽहं कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः । मम शरीरमिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः ।

स्यादेतत् । स्यादेष मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात् । अस्ति च प्रामाण्यम् । कथमन्यथा धूमोपलम्भनानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत । नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति । तदेतन्मनोराज्यविजृम्भणम् ।

माधवाचार्यः—सर्वदर्शनसंग्रहः ।

### परमात्मनः समसदयत्वस्य ।

नेश्वरो जगतः कारणमुपपद्यते । कुतः । वैषम्यनैर्घृण्यप्रसंगात् । कांश्चिदत्यन्तसुखभाजः करोति देवादीन् । कांश्चिदत्यन्तदुःखभाजः करोति पश्वादीन् । कांश्चिन्मध्यमभोगभाजो मनुष्यादीनिति । एवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत । तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहरणाच्च प्रसज्येत । तस्माद्वैषम्यनैर्घृण्यप्रसंगान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः ।

वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते । कस्मात् । सापेक्षत्वात् । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते स्यातामेतौ

दोषौ वैषम्यं नैर्घृण्यं च । न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते । किमपेक्षत इति चेद्धर्माधर्मावपेक्षत इति वदामः । अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति । एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति । देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति । एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दूष्यति ।

शंकराचार्यः—ब्रह्मसूत्रभाष्यम् ।

## Notes and Meanings.

अम्बष्ठ *m.* ( ष्ठा, ष्ठी *f.*) The offspring of a man of the Bráhm*a*na and a woman of the Vais'ya tribe, a man of the medical caste.

शक *m. plu.* The Tartars or Scythians. In Manu X. 44. they are mentioned together with पौंड्रकाः, ओड्राः, द्राविडाः, काम्बोजाः, यवनाः, पारदाः, पह्लवाः, चीनाः, किराताः, दरदाः, खशाः; the Ráma-ya*n*a ( kish. ) adds, बर्बराः, म्लेच्छाः, पारसीकाः, ताम्राः, विडालाक्षाः, शबराः, हूणाः, तुरुष्काः जवनाः, and many more.

शनकैस्तु क्रियालोपादिमा &c. इमाः वक्ष्यमाणाः पौण्ड्रकादयो मूलतः क्षत्रियजातय एव राज्यलोभवशाद् दूरदेशान्तरं पराक्रान्ताः सन्तः क्रियालोपेन उपनयनादिसंस्कारकर्मलोपेन याजनाध्यापनप्रायश्चित्ताद्यर्थं ब्राह्मणानां दर्शनाभावेन च शनैः शनैर्लोके शूद्रतां प्राप्ताः इत्यर्थः। पौण्ड्रका इत्यादेः पौण्ड्रादिदेशोद्भवाः इत्यर्थः।

तारतम्य *n.* Gradation, pro-

portion, the state or condition of more or less.

आनुपूर्व्या *ind*. One after the other, in due order.

व्यभिचार *m*. Following improper courses, doing what is prohibited or wicked; vice; sin; adultery.

वर्णसंकर *m*. Mixture or confusion of castes through intermarriage with different castes; a tribe of different origin.

अवेद्य *adj*. Not to be married; not to be known, unascertainable, secret.

आवेदन *n*. A representation, stating complaint.

यास्क *m*. Name of a sage, the author of निरुक्त.

परिच्छेत्तु *inf*. To ascertain, define.

संप्रदायप्रदीप *m*. Name of a work.

भूतपुरी *f*. Name of a town.

प्रेमघुला *f*. Name of a town.

संप्रदाय *m*. An established doctrine transmitted from one tearcher to another; any peculiar or schismatical system of religious teaching.

संतान *m*. *n*. Lineage, race, family.

बिल्वमंगल *m*. Name of a religious teacher.

प्रबन्धचिंतामणि *m*. Name of a work.

मेरुतुंगाचार्य *m*. Name of a man.

तिरोधान *n*. The being hidden or the act of hiding, concealing &c ; a covering, veil, disappearance.

कट *m*. A straw mat, a screen of straw.

वायन *n*. sweatmeats or cakes which may be eaten during a religious fast, presents of sweatmeats &c.

आसेवमाना *f*. To enjoy, indulge in, practise, perform, carry out, accomplish.

तिरोधानः गुप्तः दृष्टिपथाद्रक्षितः इति यावत् यः कटः तदभ्यन्तरे अलंकृतं निजभवनवायनमासेवमाना इत्यन्वयः ।

घण्टापथ *m*. A chief road through a village, a highway; ( *i. e.* the bell-road or that by which elephants &c.,decorated with tinkling ornaments, proceed ).

वेदप्रबोध *m.* Name of a man.

नव्य *adj.* New.

उन्नीत *adj.* Inferred.

उडुपीप्रश्न *m.* Name of a town.

अथ–तावत्, But how can we attribute to the Supreme Being the giving of supreme felicity, when such a notion has been utterly abolished by चार्वाक, the crest-gem of the atheistical school, the follower of the doctrine of बृहस्पति? The efforts of चार्वाक are indeed hard to be eradicated, for the majority of living beings hold by the current refrain–यावज्जीवं &c.

लोकगाथां–अनुरुन्धन्ते, The mass of men, in accordance with the *S*'astras of policy and enjoyment, considering wealth and desire the only ends of man, and denying the existence of any object belonging to a future world, are found to follow only the doctrine of चार्वाक.

अन्वर्थपरं नामधेयं–A name well accordant with the signified.

तत्र–विनश्यति, In this school the four elements, earth, &c., are the original principles; from these alone, when transformed into the body, intelligence is produced, just as the inebriating power is developed from the mixing of certain ingredients; and when these are destroyed, intelligence at once perishes also.

किण्व–Is explained as "drug or seed used to produce fermentation in the manufacture of spirits from sugar, bassia, &c." Colebrooke quotes from S'ankaràchárya: " The faculty of thought results from a modification of the aggregate elements in like manner as sugar with a ferment and other ingredients becomes an inebriating liquor; as a betel, areca, lime and extract of catechu chewed together have an exhilarating pro

perty not found in those substances severally.

तद् चैतन्य—प्रामाण्याभावा:त्, Expl.—Therefore the soul is only the body distinguished by the attribute of intelligence, since there is no evidence for any soul distinct from the body, as such cannot be proved, since this school holds that perception is the only source of knowledge and does not allow inference, &c.

अंगना—भवेत्, Explain. The only end of man is enjoyment produced by sensual pleasures. Nor may you say that such cannot be called the end of man as they are always mixed with some kind of pain, because it is our wisdom to enjoy the pure pleasure as for as we can, and to avoid the pain which inevitably accompanies it; just as the man who desires fish takes the fish with their scales and bones, and having taken as many as he wants, desists; or just as the man who desires rice, takes the rice, straw and all, and having taken as much as he wants, desists. It is not therefore for us, through a fear of pain, to reject the pleasure which our nature instinctively recognises as congenial. Men do not refrain from sowing rice, because forsooth there are wild animals to devour it ; nor do they refuse to set the cooking-pots on the fire, because forsooth there are beggars to pester us for a share of the contents. If any one were so timid as to forsake a visible pleasure, he would, indeed be foolish like a beast.

अत एव–औपचारिक:, Expl., Hence it follows that there is no other hell than mundane pain produced by purely mundane causes, as thorns, &c.; the only Supreme is the

earthly monarch whose existence is proved by all the world's eyesight; and the only Liberation is the dissolution of the body. By holding the doctrine that the soul is identical with the body, such phrases as 'I am thin," "I am black," &c., are at once inteligible, as the attributes of thinness, &c., and self consciousness will reside in the same subject [body]; like and the use of the phrase "my body" is metaphorical "the head of Ràhu" [Ràhu being really *all head*].

**स्यादेतत्—विजृम्भणं** Expl. "Be it so," says the opponent; your wish would be gained if inference, &c, had no force of proof but then they have this force; else, if they had not, then how, on perceiving smoke, should the thoughts of the intelligent immediately proceed to fire; or why, on hearing another say, 'There are fruits on the bank of the river', do those who desire fruit proceed at once to the shore?"

All this, however is only the inflation of the world of fancy.

**कारण** *n.* A cause, *i. e.* that which is invariably antecedent to some product and is not otherwise constituted.

**वैषम्य** *n.* Inequality.

**नैर्घृण्य** *n.* Pitilessness, unmercifulness, cruelty.

**प्रसंगात्** *ind.* On the occasion of, in consequence of, on account of, because of; through connection with or relation to; with all the heart &c.

**पृथग्जनः–पामरः**, An ignorant man, a fool, blockhead, a low person, an idiot, a wicked man.

**अवधारित** *adj.* Ascertained, known, certain.

**स्वच्छत्व** *n.* Great purity.

**प्रसञ्ज** *conj.* 1. P. To be relevant or applicable, to apply; to adhere or cling to

to become fixed upon or attached to; to cleave to.

स्वच्छत्वादिश्चासौ ईश्वरस्वभावश्चेति विग्रहः ।

जुगुप्सित *adj.* Reviled, blamed, censured, abused.

दुःखयोग *m.* Occurrence or presence of trouble or pain.

दुःखयोगविधानात्— Following the occurrence or presence of trouble or pain.

सर्वप्रजोपसंहरणात्—Because of the destruction of all living beings.

प्रसज्य *adj.* To be attached to, to be connected with, applicable; a possible case.

सापेक्षत्व *n.* Dependence on, need, necessity—सापेक्ष *adj.* Having regard or respect to, dependent on.

निरपेक्ष *adj.* Indifferent, regardless; without purpose or hope; independent of, unconnected or unconcerned with.

निर्मातृत्व *n.* Creatorship, the condition of a maker or builder or producer.

धर्माधर्म *m. du.* Right and wrong, justice and injustice.

साधारणं कारणं–A cause belonging to more than the one instance alleged; generic cause.

असाधारणं कारणं–A cause not common; special cause, specific cause.

कार्यत्वावच्छिन्ना या कार्यता तन्निरूपितकारणताशालित्वं=साधारणकारणत्वं ।

कार्यत्वातिरिक्तधर्मावच्छिन्ना या कार्यता तन्निरूपितकारणताशालित्वं=असाधारणकारणत्वं । The कार्यत्वधर्म is common to all कार्यs and with reference to this कार्यता, God, time, &c., are the कारण*s*. कार्यत्व is the state of being produced or brought into existence. In a घट the कार्यता in reference to its being a घट only, belongs to the कुलाल; but the कार्यता as such answers to the कारणता of God &c. &c., that is God &c., are the साधारणकारण*s* of घट, as for as घट is simply a कार्य *i. e.* coming into existence, and not of घट as घटत्वावच्छिन्न-

कार्यं. कार्यत्वावच्छिन्न प्रति यत्कारणं तत्साधारणकारणं, the property of कार्यs by which God &c., are their कारणs is not the quality of their existence, but that of being brought into existence. If we could say existence only, then आत्मा would have ईश्वर for its कारण which the आत्मा has not. For घटत्वावच्छिन्नकारणता is in कुलाल. Looking at the घट as a mere effect (कार्य) God &c., are its कारणs. घटत्वावच्छिन्ना या कार्यता तन्निरूपितकारणताशालित्वमसाधारणं कारणं *i. e.* असाधारणकारण is that which has the quality of being a कारण ascertained by that कार्यता which is measured by घटत्व *i. e.* the property or quality of being a घट not merely as a कार्य, but the qualities of the कार्य. This definition is in reference only with the particular object घट to make it general. Now कार्यत्वातिरिक्तधर्मावच्छिन्ना या कार्यता तन्निरूपितकारणताशालित्वं असाधारणकारणत्वं is that which has the quality of being a कारण ascertained by that कार्यता which is measured by qualities apart from the कार्यत्व, as कुलाल is the असाधारणकारण of घट. The cause of an effect as having the quality other than being an effect is the असाधारणकारण. The असाधारणकारणs. are काल, दिक्, अदृष्ट, प्रागभाव, ईश्वर, तदिच्छा, तत्कृति and तज्ज्ञान&c.

---

## TARANGA. 20.

[ A graphic description of a famine in the reign of तुंजीन the king of Kashmere. ]

अथ वाक्पुष्टया सार्धं देव्या दिव्य प्रभावया ।
भुवं भूपवरोऽभौक्षीत् तुञ्जीनो रञ्जयन् प्रजाः ॥
दम्पतीभ्यामियं ताभ्यामभूष्यत वसुन्धरा ।

गंगामृगांकलेखाभ्यां जटाभूरिव धूर्जटेः ॥
मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् ।
शतहृदापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता ।
प्रजासु दुःसहा जातु व्यापद् दैवी व्यजृम्भत ॥
पाकोन्मुखशरच्छालिच्छन्ने केदारमण्डले ।
मासि भाद्रपदेऽकस्मात् पपात तुहिनं महत् ॥
तस्मिन् विश्वक्षयोद्युक्तकालाट्टहसितोपमे ।
न्यमज्जन् शालयः साकं प्रजानां जीविताशया ॥
अथासीत् क्षुत्परिक्षामजनप्रेतकुलाकुलः ।
प्राकारो निरयस्येव घोरो दुर्भिक्षविप्लवः ॥
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः ।
कुक्षिंभरिः क्षुदुत्तप्तो विसस्माराऽखिलो जनः ॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता ।
सुतो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥
स्नाय्वस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावताम् ।
अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥
रुक्षाभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन् ।
एक एको जगज्जीवैरियेष स्वात्मपोषणम् ॥
तस्मिन् महाभये घोरे प्राणिनामतिदुःसहे ।
ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि ।

क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ॥
अटवीषु श्मशानेषु रथ्यास्वावसथेषु च।
क्षुत्क्षामः क्ष्माभुजा तेन नाहि कश्चिदुपैक्ष्यत ॥
अतो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् ।
क्षपायामेकदा देवीमेवमूचे सुदुःखितः ॥
देव्यस्मदपचारेण ध्रुवं केऽनापि दुस्तरा ।
जाता निरपराधानां जनानां व्यापदीदृशी ॥
धिङ्मामधन्यं यस्याऽग्रे लोकोऽयं शोकपीडितः ।
पश्यन्नशरणामुर्वीमनुग्राह्यो विपद्यते ॥
प्रजाः निःशरणा एता अन्योऽन्यं बान्धवोज्झिताः ।
अरक्षिता भयेऽमुष्मिन् किं कार्यं जीवितेन मे ॥
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता ।
निष्किंचनाऽद्य संजाता पृथिवी हतगौरवा ॥
तदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे ।
उपायः कतमस्तावत् समुद्धर्तुं क्षमः प्रजाः ॥
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः ।
कालरात्रिकुलैर्विश्वक् परीत इव वर्तते ॥
हिमसंघातदुर्लंघ्यक्षितिभृद्द्वानिर्गमाः ।
बद्धद्वारकुलायस्थखगवद्विवशा जनाः ॥
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः ।
कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥
तदेष गलितोपायो जुहोमि ज्वलने तनुम् ।

न तु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशम् ॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते ।
पौरान् पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा ।
निपत्य तल्पे निःशब्दं रुरोद पृथिवीपतिः ॥
निर्वातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव ।
वीक्ष्यमाणाऽथ तं देवी जगाद जगतीभुजम् ॥
राजन् प्रजानां व्यसनैः कोऽयं मतिविपर्ययः ।
येनेतर इव स्वैरमधीरोचितमीहसे ॥
यद्यसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता ।
तन्महीपाल महतां महत्त्वस्य किमंकनम् ॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः ।
सत्यव्रतानां भूपानां कर्तुं शासनलंघनम् ॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् ।
प्रजानुपालनेऽनन्यकर्मता भूभृतां व्रतम् ॥
उत्तिष्ठ व्रतिनामद्य क्व विपर्येति मद्वचः ।
प्रजापाल प्रजानां ते नास्त्येव क्षुत्कृतं भयम् ॥
इति संरम्भतः प्रोक्ते तयाऽनुध्याय देवताः ।
प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ॥
प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् ।
प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः ॥
वस्त्वन्तरं किमपि तत् साध्वी नूनं ससर्ज सा ।

जनताजीविताबाप्त्यै न कपोतास्तु तेऽभवन् ॥
तादृशं नहि निर्व्याजप्राणिकारुण्यशालिनाम् ।
हिंसया धर्मचर्यायाः शक्यं चाऽपि कलंकनम् ॥
अभवन्निर्मलं व्योम देवीकृत्यैः सह क्रमात् ।
साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः ।
तत्यजे ज्वलनज्वालानलिनप्रच्छदे तया ॥
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् ।
स्थानं जनैस्तद् वाक्पुष्टाटवीत्यद्यापि गद्यते ॥

कल्हणः--राजतरंगिणी ।

## कामन्दकीयनीतिसारः ।

वाक् सूनृता दया दानं दीनोपगतरक्षणम् ।
इति संगः सतां साधु ह्येतत् सत्पुरुषव्रतम् ॥
न तेभ्योऽभ्यधिकाः सन्तः सन्ति सत्पुरुषव्रतैः ।
दुःखपंकार्णवे मग्नं दीनमभ्युद्धरन्ति ये ॥
आविष्ट इव दुःखेन हृद्गतेन गरीयसा ।
समान्वितः करुणया परया दीनमुद्धरेत् ॥
आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥
जलान्तश्चन्द्रचपलं जीवनं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥
जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभंगुरम् ॥

सुजनैः संगतं कुर्याद्धर्माय च सुखाय च ॥
हिमांशुमाली न तथा न चोत्फुल्लोत्पलं सरः ।
आनन्दयति चेतांसि यथा सज्जनचेष्टितम् ॥
विभूतीः प्राप्य परमाः सतां सम्भोग्यतां नयेत् ।
यासु सन्तो न तिष्ठन्ति ता वृथैव विभूतयः ॥
विश्राम्यंति महात्मानो यत्र कल्पतराविव ।
स श्लाघ्यं जीवति श्रीमान् सत्संभोगफलाः श्रियः ॥
असाद्भिरसतामेव भुज्यन्ते धनसम्पदः ।
फलं किम्पाकवृक्षस्य ध्वांक्षा भक्षन्ति नेतरे ।
ग्रीष्मसूर्यांशुसन्तप्तमुद्वेजनमनाश्रयम् ।
मरुस्थलमिवोदग्रं त्यजेद्दुर्जनसंगतम् ॥
असाध्यं साधुमन्त्राणां तीव्रं वाग्विषमुत्सृजन् ।
द्विजिह्वं वदनं धत्ते दुष्टो दुर्जनपन्नगः ॥
तीव्राण्युद्वेगकारीणि विसृष्टान्यनयात्मकैः ।
कृन्तन्ति देहिनां मर्म शस्त्राणीव वचांसि च ॥
प्रियं तथ्यञ्च पथ्यं च वदेद्धर्मार्थमेव च ।
अश्रद्धेयमसभ्यञ्च परोक्षं कटु चोत्सृजेत् ॥
हृदि विद्ध इवात्यर्थं यया सन्तप्यते जनः ।
पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥
प्रियमेवाऽभिधातव्यं नित्यं सत्सु द्विषत्सु च ।
शिखीव केकामधुरः प्रियवाक् कस्य न प्रियः ॥
ये प्रियाणि प्रभाषन्ते प्रयच्छन्ति च सत्कृतिम् ।

श्रीमन्तोऽनिंद्यचरिता देवास्ते नरविग्रहाः ॥
शर्मं नयति यः क्रुद्धान् सर्वबन्धुरमत्सरी ।
भीताश्वासनकृत् साधुः स्वर्गस्तस्याल्पकं फलम् ॥
पापेऽप्यपापः परुषेऽप्यभिधत्ते प्रियाणि यः ।
मैत्रीद्रवान्तःकरणस्तस्य मुक्तिः करे स्थिता ॥

**कामन्दकः-नीतिसारः ।**

## विद्याप्रशंसा ।

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥
अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥
हर्तुर्न गोचरं याति दत्ता भवति विस्तृता ।
कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥
ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥
विद्याशस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥
न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥
मातेव रक्षति पितेव हिते नियुंक्ते ।

कान्तेव चापि रमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं ।
किं किं न साधयति कल्पलतेव विद्या ॥

अनेके—सुभाषितरत्नभाण्डागारम् ।

## नीतिपद्धतिः ।

यः समुत्पतितं क्रोधं मानं चापि नियच्छति ।
स श्रियो भाजनं पुंसां यश्चापत्सु न मुह्यति ॥
परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः ।
प्रद्वेषश्च गुणज्ञेषु पन्थानो ह्यापदां त्रयः ॥
ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्तन्ते तस्मान्निःशेषमाचरेत् ॥
पुंसामसमर्थानामुपद्रवायात्मनो भवति कोपः ।
पिठरं क्वथदतिमात्रं निजपार्श्वाण्येव दहतितराम् ॥
अप्रतिबुद्धे श्रोतरि वक्तृत्वमनर्थकं पुंसाम् ।
नेत्रविहीने कामिनि लावण्यविलासवत्स्त्रीणाम् ॥
अतिपरिचयादवज्ञा भवति विशिष्टेपि वस्तुनि प्रायः ।
लोकः प्रयागवासी कूपस्नानं सदाचरति ॥
यस्यास्ति सर्वत्र गतिः स कस्मात्स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ॥
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ।
विद्यते नहि स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥

बलोपपन्नोपि हि बुद्धिमान्नरः परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणं को नु विषं विचक्षणः ॥

वह्निः समुद्भवति निर्मथनेन काष्ठा-
दम्भो ददाति वसुधा च निखन्यमाना ।
गच्छन्प्रयास्यति शनैरपि चाध्वनोन्त-
मारब्धकार्य इह किं न नरः करोति ॥

क्वचिद्भूमौ शायी क्वचिदपि च पर्यंकशयनः ।
क्वचिच्छाकाहारी क्वचिदपि च मांसोदनरुचिः
क्वचित्कंथाधारी क्वचिदपि विचित्रांबरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥

क्वचिन्नृत्तं गीतं क्वचिदपि च हा हेति रुदितं
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः
क्वचिद्रम्या नारी क्वचिदपि जराजर्जरवपु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥

वल्लभदेवः—सुभाषितावलिः ।

## कलिविडम्बनं ।

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥

उच्चैरुद्घुष्य जेतव्यं मध्यस्थश्चेदपण्डितः
पण्डितो यदि तत्रैव पक्षपातोऽधिरोप्यतां ॥

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥

गृहिणी भगिनी तस्याः श्वशुरौ श्याल इत्यपि ।
प्राणिनां कलिना सृष्टाः पञ्चप्राणा इमेऽपरे ॥
जामातरो भागिनेया मातुला दारबान्धवाः ।
अज्ञाता एव गृहिणां भक्षयन्त्याखुवद् गृहे ॥
मातुलस्य बलं माता जामातुर्दुहिता बलं ।
श्वशुरस्य बलं भार्या स्वयमेवातिथेर्बलं ॥
भूषणैर्वसनैः पात्रैः पुत्राणामुपलालनैः ।
सकृदागत्य गच्छन्ती कन्या निर्मार्ष्टि मन्दिरं ॥
भार्ये द्वे पुत्रशालिन्यौ भगिनी पतिवर्जिता ।
अश्रान्तकलहो नाम योगोऽयं गृहमेधिनां ॥
द्वे भार्ये बहवः पुत्रा दारिद्र्यं रोगसम्भवः ।
जीर्णौ च मातापितरावेकैकं नरकाधिकं ॥
शक्तिं करोति संचारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधं ॥
विडम्बयन्ति ये नित्यं विदग्धा धनिनो जनान् ।
त एव तु विडम्ब्यन्ते श्रिया किंचिदुपेक्षिताः ॥
क्षणमात्रं ग्रहावेशो याममात्रं सुरामदः ।
लक्ष्मीमदस्तु मूर्खाणामादेहमनुवर्तते ॥ ॥
कण्ठे मदः कोद्रवजो हृदि ताम्बूलजो मदः ।
लक्ष्मीमदस्तु सर्वांगे पुत्रदारमुखेष्वपि ॥ ॥
अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान् ।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे ॥

कालान्तरे ह्यनर्थाय गृध्रो गेहोपरिस्थितः ।
खलो गृहसमीपस्थस्सद्योऽनर्थाय देहिनां ॥
वासः पुण्येषु तीर्थेषु प्रसिद्धश्च मृतो गुरुः ।
अध्यापनावृत्तयश्च कीर्तनीया धनार्थिभिः ॥
आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ।
किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥
काममस्तु जगत्सर्वं कालस्यास्य वशंवदं ।
कालकालं प्रपन्नानां कालः किं नः करिष्यति ॥

**नीलकण्ठः—कलिविडम्बनं ।**

**शिवराजस्य म्लेच्छावस्कन्दयात्राप्रसंगस्य ।**

शिवनृपस्य तु वीरवरास्तदा तुरगिणो रथिनो गजिनस्तथा ।
विविधहेतिविभूषितपाणयः प्रतिययुः सशराः सशरासनाः ॥
पदचरा अपि यन्त्रपुरःसराः सुरविमाननिवेशनहर्षिताः ।
कवचिनो विविधायुधधारिणो रणविनिर्जितशत्रुचया ययुः ॥
यवनवर्यचमूपतयास्त्विदं चरमुखैरवगम्य सुविस्तरम् ।
भयविकम्पितपाणिपदादयोऽप्रिमविधावतिमन्दधियोऽभवन् ॥
अयुतसंख्यतुरंगमसादिनः करिगता विशिखाधिपतेश्च ते ।
शकटवेशितयन्त्रततीः पुरः किल विधाय भटा अवतस्थिरे ॥
उभयसैन्यसमुत्थितरेणुभिर्दशदिशो नितरां परिपूरिताः ।
दिनकरो जलदैरिव संवृतः समभवद् घटिकाद्वयमावृतः ॥
करिवरैरसितैस्तुरगैः सितैः रविकरोद्गतभैः करवालकैः ।
समरभूः सतडिद्घनसंवृताम्बररुचं सकलानुचकार सा ॥

समरभूर्द्विरदादिभिरावृता सजलदाम्बरकान्तिमपाहरत् ।
गगनमप्यसकृद्रजसावृतं समहरत्किल भूमिभवां रुचम् ॥
नरपतिः स्वयमेव रिपोश्चमूं न विनिहन्तुमगात्पतिवर्जिताम् ।
बुधमतो निजधर्मरतः सदा नहि महान् विजहाति महापथम् ॥
यवनभूपतिसैनिकपालका विविधवाद्यविवादनतत्पराः ।
कवचिनो रथिनो ध्वजिनोऽखिला रणभुवि व्यसृजन् शरसंहतीः
जलदनिस्वनयन्त्रमुखोद्गता पृथुतरायसगोलकसंहतिः ।
नरपतेः पृतनां समकम्पयन्मरुदिव प्रबलः कदलीततिम् ॥
नरपतिध्वजिनीपतिपालकाः पुरत एकगणं विनिधाय ते ।
युगपदाविविशुर्द्विषतश्चमूं तुरगिणः सकला अपि सर्वतः ॥
हरिखुरोद्धतधूलिचयावृताः प्रचुरधूमपटैरपि संवृताः ।
यवनपास्तिमिरौघगता इव स्वपरलोकविवेकविवर्जिताः ॥

योधानृपस्य गजिनस्तुरगाधिरूढाः ।
पद्गा अपि द्विषदनीकिनिकां समेत्य ।
वीरव्रजं गजसमूहमलं प्रमत्तं ।
सिंहा इव प्ररुरुजुर्भयवार्धिमग्नं ॥

यवनसैन्यपतिः करिमस्तकोपरिगतः सशरः सशरासनः ।
सकलयन्त्रसमूहविमोक्षणे तदधिपान् सकलान् समचोदयत्

निःस्त्रिंशखड्गकरवालकृपाणकुन्त- ।
भल्लासिपट्टिशशिलाशितबाण पूगैः ।
यन्त्रैश्चतोमरपरश्वधशक्तिऋष्टि- ।
चक्रैश्च जघ्नुरपरान् शिवभूपयोधाः ॥

ते बर्बरा अपि शका अपि पारसीका
हूणाश्च तंगणगणाः सशिखाशिखाश्च ।
म्लेच्छा विघूर्णितदृशो मधुपानमत्ता
नानायुधा युयुधिरे नरपस्य योधैः ॥
मध्याह्नगे सवितरि प्रबभूव युद्धं
भीरोर्भयोद्भवकरं बहुहर्षदं तत् ।
शूरव्रजस्य रुधिरौघपरिप्लुतास्ते
रेजुः सपुष्पनिचया इव किंशुकौघाः ॥
छिन्नेऽपि दक्षिणकरेऽन्यकरेण शत्रो-
र्दक्षं करं समलुनात्सहखड्गमेकः ।
अन्यः करद्वयविहीनकलेवरोऽपि
दन्तैर्भुजंगम इव व्यदशत् स्वशत्रुम् ॥
विद्धोपि वक्षसि शरेण सपुंखमेको
दद्भिर्विदश्य दशनच्छदमत्र रोषात् ।
छित्वा शिरो निजरिपोर्विमुमोच देहं
हे शंकरेश भव सांब शिवेति जल्पन् ॥
छिन्नेऽपि मूर्धनि शिरो झटिति स्वशत्रो-
श्छित्वासृजन्निजतनुं करवालपाणिः ।
गच्छामि नाकममुनैनमतो नयामि
नोचेत्कृतघ्नतरता भवितेति चान्यः ॥
छित्त्वा करं करिवरं विनिपात्य भूमा-
वेको यदा गजपतिं निजघान हन्त ।

अङ्केत्युदीर्य वचनं निपपात भूमौ
देहं मुमोच करिणा सह तत्क्षणेऽसौ ॥
वीरौ धनुः प्रहरणौ युगपत्सपत्रा
कृत्वा परस्परमुभौ प्रविहाय देहौ ।
एकं विमानमधिरुह्य दिवं प्रयातौ
हृत्त्वाविवातिरुचिरौ समुपेत्य सख्यं ॥
शाक्तीक एक उरसि प्रतिरोपितं स्वे
बाणं विलोक्य रिपुणा पुरतः स्थितेन ।
रोषान्वितोऽस्य हृदयं प्रविदार्य शक्त्या
भित्त्वार्कमण्डलमसावपि निर्जगाम ॥
कुन्तायुधौ तुरगिणौ समराङ्गणस्थौ भित्वा परस्परमुभावपि मर्मदेशे
वैरं कलेवरमपि प्रविहाय यातौ स्वर्गं सुरोत्तमसमानवपुर्दधानौ ॥
सपट्टिशः कश्चन वारबाणी रणांगणं चर्मकरः समेत्य
गजान्विशुण्डांस्तुरगान्वितुण्डान्भटान्विमुण्डान्कृतवान्प्रचण्डान् ॥
रक्तोक्षिता समरभूर्विजहार सायं सूर्यप्रभाकलितवारिदसंघशोभाम्
शान्तं रजोऽपि सकलं समगात्तदानीं पंकत्वमत्र बत केचन शेरते स्म
दात्यूहगृध्रनिचया उपरि भ्रमन्तो
नैवालभन्त वसतिं कुहचित् समेताः ।
मन्येपकीर्तिपटलं यवनाधिपस्य
शीर्षस्थितं भ्रमति तद्वसतेरभावात् ॥
योधा विकोशकरवालकराः कराला-
स्तां कातरां यवनपध्वजिनीमकृन्तन् ।

द्रौणिर्यथा निजसुहृत्प्रियकृत्कृपाणी
शिष्टं व्यनीनशदलं बलमर्जुनस्य ॥
कंधरां समपहाय कं धरां प्राप्य संयति जहास कस्यचित्
मां सदा नमयतः प्रपूर्तये दुर्भरस्य जठरस्य किं पुरः ॥
प्रेतव्राताचलोत्था रुधिरजलवहा हस्तिहस्तौघमीना
शुभ्राच्छोष्णीषफेना नरकरभुजगा केशजंबालयुक्ता ।
बालास्यालीढवत्क्रावलिजलजचया चर्मकच्छा गजेंद्र-
ग्रावाघातप्रशब्दा समजनि तटिनी तां भुवं प्लावयन्ति ॥
द्रुतां स्व सेनां प्रसमीक्ष्य वीरो जमालनामाऽभ्यपतत्तरस्वी ।
सहस्रसंख्यैस्तुरगाधिरूढैः समन्वितः सैन्यपतिर्जयैषी ॥
स सांयुगीनः समराजिरस्थः सवारबाणः सतलः सतूणः ।
सकार्मुकः सर्वभटैरुपेतः ससर्ज बाणान् समपर्वभाजः ॥
घनो यथा प्रावृषि वर्षधारा महीधरे वर्षति चातिमात्रम् ।
तथा शरान् व्यात्तमुखान् भुजंगानिवासृजद्राजनियुक्तसैन्ये ॥
तदीययोधा अपि वाजिवाहाः कचाचिताास्ताम्रमुखाः सुरापाः ।
शरैश्च भल्लैः परिघैः कृपाणैरपीडयन् पार्थिवसैन्यमाजौ ॥
दिनावसाने नृपसैन्यनाथः खलीनलीनाननवाजिसादी ।
कृपाणपाणिः सह योधसंघैः पुरोऽभियातो यवनाधिपस्य ॥
तयोरभूद्युद्धमतीव घोरं ससैन्ययोः सादितवीरचम्वोः ।
घटीद्वयं तीक्ष्णशरैरमोघैः खड्गैश्च भल्लैः करवालकैश्च ॥
गजाश्च मत्तास्तुरगाः क्रमेला वृषाश्च खड्गाभिहता निपेतुः ।
नृणां शिरोभिः पतितैश्च देहैः समास्तृता भूरुधिरौघपूर्णा ॥

नृपस्य वीरैर्बहुधा विशीर्णा विदुद्रुवुस्ते यवनाः प्रभीताः ।
तृणं दधुः केचन वक्त्रमध्ये भटाः प्रणेमुश्च तथैव केचित् ॥
गजं विशुण्डं विनिपात्य भूमौ जमालसंज्ञं बिभिदुः कृपाणैः ।
नृपस्यवीराः स तु देहमाजौ निधाय यातो दिवमेव वीरः ॥
हतावशिष्टा विदिशो दिशश्च ययुर्निशायां विनिधाय हेतीः ।
मृगा यथालक्ष्य भयाद्द्रवन्ति वृकांस्तथा भीतिविवर्णवक्त्राः॥
महाबलोऽब्दुल्लसुतस्तुवल्ली निबध्य चीराणि पदद्वये सः ।
दुद्राव वृक्षैः पिहितं प्रदेशं दिनावसाने तिमिरप्रपूर्णम् ॥
पचिक्रियाणोंनयनादिकर्मरता मनुष्या अपि भिक्षुका ये ।
भिषग्वराः स्त्रीनिचयाश्च दीनाः शस्त्रैर्विहीना अपि तान्न जघ्नुः॥
बभूव तद्भूमितलं पिशाचपतेर्निवासेन समं तदानीम् ।
उदूचुरेके शिव मामवेति हा तात हा बालसुतेति केचित् ॥
अनर्गलावाजिगजादिवाहा इतस्ततो बभ्रमुरार्तिभाजः ।
नृपालसेनापतिसैनिकास्तन्नपाहरन् हृष्टतराः समेताः ॥
सदुंदुभिध्वाननिवेदितोद्यज्जयो ययौ बन्दिजनस्तुतश्रीः ।
यशोवितानैर्विदिशो दिशश्च विपूयरन् राजगिरिं ससैन्यः ॥
शिवोऽपि भूपो जयिनं तमारात् गतं समालिंग्य विभूषणाद्यैः ।
गिरा च सत्कृत्य महीसुरेभ्यो धनं ददौ भूरितरं नरेन्द्रः ॥
शतं गजा पञ्चसहस्त्रसंख्यतुरंगमास्तद्विगुणाः क्रमेलाः ।
रथाः सहस्त्रं वसनानि भूषा मुक्ताफलानां प्रकराश्च यत्तत् ॥
रत्नानि हेम्नोऽपि च सप्तलक्षमुद्राः पुरस्तस्य निधाय तस्थौ ।
भटाग्रणीः सादितशत्रुपक्षः स वाहिनीपो विनिबध्य पाणी ॥

नृपस्तु तत्सर्वमपि प्रगृह्य प्रत्यर्पयद्वीरभटाधिपाय ।
जगाद चैतत् सकलं त्वयाद्य प्रदेयमेवं स्वभटप्रभुभ्यः ॥
प्रजाप्रपीडाकरशत्रुवर्गविनाश आरब्ध इतो मया यत् ।
स्वप्ने समागत्य निशावसाने यदाह देवी हर नीचवर्गम्॥
निशम्य वाक्यं नथुनामधेयस्तथा स चक्रे वरवीरनाथः ।
भटा यथा भागमवाप्य सर्वे कृतज्ञतामस्य जगुः समेताः ॥
अतीव भक्तो नरनाथनाथः समर्चनार्थं जगतां जनन्याः ।
विधाय शैलीं प्रतिमां शिवायाः स वासयामास गिरौ प्रतापे॥
विजयपुरपतिर्निशम्य वृत्तं समरभवं सकलं चरावलिभ्यः ।
हृदयसरसिजे स कुन्तघातैरविरतविद्ध इवाभवत्तदानीम् ॥
अब्दुल्लं निहतं तदीयतनयं यातं भयार्त्तं रणा-
च्छ्रुत्वा सा यवनाधिपस्य महिला हेला विसृज्याखिलाः ।
पर्यंकादवरुह्य कुन्तलचयं प्रोन्मुच्य हा हन्त हा
राज्यं मग्नमिदं मदीयमधुनेत्येवं बभाषे वचः ॥
पुरपतिः पतितो भयवारिधौ किमधुनाधियुता जनताऽखिला ।
मम करिष्यति यास्यति चेच्छिवो बत शिवोऽप्यशिवो भवितेति सा

श्रीपुरुषोत्तमपण्डितः--शिवकाव्यं ।

अलकायक्षकान्तयोर्वर्णनं ।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुंगमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरबकं चारुकर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरसना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमो वृत्तिरम्याः प्रदोषाः ॥
आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्ति-
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥
यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥
मन्दाकिन्याः पयसि शिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥
नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः ।

शंकास्पृष्टा इव जलमुचस्त्वादृशो यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्याम्
एकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्षोपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥

रक्ताशोकश्चलकिशलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥

तन्मध्ये च स्फटिकफलका कांचनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिंजावलयसुभगैर्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्धः ॥
एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥
तां जानीथाः परिमितकथां जीवितं मे द्वितीयम्
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वाद्
इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥
आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥
उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्रांकं विरचितपदं गेयमुद्गातुकामा ।

तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥

कालिदासः—मेघदूतं ।

## द्वारकावर्णनं ।

मध्येसमुद्रं ककुभः पिशंगीर्या कुर्वती कांचनवप्रभासा ।
तुरंगकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥
कृतास्पदा भूमिभृतां सहस्रैरुदन्वदम्भःपरिवीतमूर्तिः ।
अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव ॥
त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु छायेव या स्वर्जलधेर्जलेषु ॥
रथांगभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः ।
प्रेम्णोपकण्ठं मुहुरंकभाजो रत्नावलीरम्बुधिराबबन्ध ॥
यस्याश्चलद्वारिधिवारिवीचिच्छटोच्छलच्छंखकुलाकुलेन ।
वप्रेण पर्यन्तचरोडुचक्रः सुमेरुवप्रोऽन्वहमन्वकारि ॥
वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाजि मुष्णन् रत्नानि रत्नाकरतामवाप ॥
अम्भश्च्युतः कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः ।
यत्रातपे दातुमिवाधितल्पं विस्तारयामास तरंगहस्तैः ॥
यच्छालमुत्तुंगतया विजेतुं दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवांछितार्थैर्व्रीडादिवाभ्यासगतैर्विलिल्ये ॥
कुतूहलेनेव जवादुपेत्य प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद्भृशमम्बुवर्षव्याजेन यस्या बहिरम्बुवाहः ॥

यदंगनारूपसरूपतायाः कंचिद्गुणं भेदकमिच्छतीभिः ।
आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥
स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्यः क्षणदासु यत्र नभोगता देव्य इव व्यराजन् ॥
कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि समूहमूहुः पयसां प्रणाल्यः ॥
यस्यामतिश्लक्ष्णतया गृहेषु विधातुमालेख्यमशक्नुवन्तः ।
चक्रुर्युवानः प्रतिबिम्बितांगाः सजीवचित्रा इव रत्नभित्तीः ॥
सावर्ण्यभाजां प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयांगनानाम् ।
यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥
शुकांगनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् ।
यस्यामलिन्देषु न चक्रुरेव मुग्धांगना गोमयगोमुखानि ॥
गोपानसीषु क्षणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः
हरिण्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥
बृहत्तुलैरप्यतुलैर्वितानमालापिनद्धैरपि चावितानैः ।
रेजे विचित्रैरपि या सचित्रैर्गृहैर्विशालैरपि भूरिशालैः ॥
चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलांगं यस्यां जनः कृत्रिममेव मेने ॥
क्षितिप्रतिष्ठोऽपि मुखारविन्दैर्वधूजनश्चन्द्रमधश्चकार ।
अतीतनक्षत्रपथानि यत्र प्रासादशृंगाणि वृथाध्यरुक्षत् ॥
यस्यामजिह्मा महतीमपंकाः सीमानमत्यायतयोऽत्यजन्तः ।
जनैरजातस्खलनैर्न जातु द्वयेऽप्ययमुच्यन्त विनीतमार्गाः ॥

परस्परस्पर्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः ।
श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज ॥
क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवन् जनस्य याः सम्पदस्ता मनसोऽप्यगम्याः॥
कला दधानः सकलाः स्वभाभिरुद्भासयन् सौधसिताभिराशाः।
यां रेवतीजानिरियेष हातुं न रौहिणेयो न च रोहिणीशः ॥
बाणाहवव्याहतशम्भुशक्तेरासत्तिमासाद्य जनार्दनस्य ।
शरीरिणा जैत्रशरेण यत्र निःशंकमूषे मकरध्वजेन ॥
निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय ।
उद्रश्मिरत्नांकुरधाम्नि सिन्धावाह्वास्त मेरावमरावती या ॥
स्निग्धांजनश्यामरुचिः सुवृत्तो वध्वा इवाध्वंसितवर्णकान्तेः ।
विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव ॥

माघः—शिशुपालवधम् ।

Notes and Meanings.

अथ &c. दिव्यप्रभावया, अलौकिकमहात्म्यया, वाक्पुष्टया, वाचा सत्यवाक्येन पुष्टा उपचिता सदा-सत्यकथनशीला इत्यर्थः । रंजयन्, यथाविधि रक्षणभरणादिना ह्लादयन् । भुवं पृथ्वीं काश्मीरराज्यमित्यर्थः । भूपवरः, नृपश्रेष्ठः । Expl. The great king तुंजीन, pleasing his subjects, shared the administration with his queen वाक्पुष्टा possessed of divine power.

दंपतीभ्यां &c. गंगा भागीरथी च मृगांकलेखा मृगः हरिणरूपः अंकः चिह्नं यस्य सः मृगांकः चन्द्रः तस्य लेखा कला शशिकला च ताभ्यां सुरधुनीचंद्रकलाभ्यां । धूः जटेः धुरः जगद्वहनभारस्य जटिसंघातो यस्मिंस्तस्य । जटाभूः जटानां लम्बकेशगुच्छानां भूः आश्रयः शिर इत्यर्थः। दंपतीभ्यां जाया पतिश्च इति द्वन्द्वसमासे जायाया दंभावो जंभावो वा निपात्यते, तेन दंपती, जंपती, जायापती चेति

पदत्रयं सिद्धांतयाति । काश्मीरदेशस्य बहुरत्नाकरत्वात् वसुधराशब्देन निर्देशः । यथा हि जटाधिष्ठितगंगया भालस्थितचन्द्रकलया च शिवशिरः अत्यर्थं शोभते तथैव अतिपवित्रचरित्रया वाक्पुष्टया सर्वलोकरंजनेन तुंजीनेन च काश्मीरदेशः शुशुभे इति विशदार्थः । चंद्रस्य गुरुपत्नीहरणानंतरं पापरूपकलंकधारणात् मृगांक इति नाम । अथ वा दक्षराजशापात् यक्ष्माक्रांते च तस्मिन् स्वर्वैद्येन स मृगधारणे आदिष्टः ततः प्रभृति चंद्रस्यापि मृगधारणात् मृगांकत्वं द्रष्टव्यं । Expl. The world was graced by the king and queen as the head of S'iva is beautified by the Gangá and the crescent.

मण्डलं &c.—शतं ह्रदाः शब्दाः यस्याः सा विद्युच्च पयोजलं वहतीति, मेघश्च तडिन्मेघौ । मण्डलं जनपदमण्डलं पक्षे मण्डलाकारं अर्धवृत्ताकारमित्यर्थः । नानावर्णैः ब्राह्मणादिविविधजातिभिः पक्षे नीलपीतरक्तादिभिः मनोरमं रमणीयं विचित्रं च । यथा हि विद्युन्मेघौ नानावर्णैरंजितं वृत्ताकारं इन्द्रधनुर्धत्तः तथा तौ दंपती ब्राह्मणादिनानावर्णोपशोभितं राज्यं पालयामासतुरिति सरलार्थः । Expl. They governed well the circle of their territory inhabitated by people of the several castes as Lightning and Cloud hold the bow of Indra (rain-bow) consisting of several beautiful colours.

तयोः &c. प्रभावश्च कोशदण्डजप्रतापश्च माहात्म्यं च उदाराशयत्वं च तयोः जिज्ञासा ज्ञातुमिच्छा तस्यै प्रभावमाहात्म्यजिज्ञासार्थं तयोः कीदृशः प्रभावः महिना वा तत्परीक्षितुमित्यर्थः । उद्यता उद्युक्ता कृतयत्ना इति यावत् । दुःखेन सह्यते इति असह्या । दैवी अमानुषी । व्यापद् दुर्भिक्षरूपं व्यसनं । प्रजासु प्रकृतिवर्गेषु । जातु कदाचित् । व्यजृंभत प्रादुर्बभूव । प्रजासु दुर्भिक्षपीडितासु सकौ राजा कीदृग्व्यवहारेण स्वप्रभावं प्रकटयेत् इति सरलार्थः । दैवव्यसनानि यथाह कामन्दकः—‘ हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पंचविधं दैवं मानुषं व्यसनं ततः । आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पंचधा मतं ’ ।

Expl. Once a severe calamity, caused by the gods: came upon the people, as if to test the power and

magnanimity of the king and queen.

पाकोन्मुख &c.—पाके परिणतौ उन्मुखाः प्रवणाः पक्वप्रायाः तैः परिणतप्रायैः । शरच्छालिभिः शरत्कालोद्भवैर्धान्यैः । छन्ने व्याप्ते । केदारमण्डले शस्यक्षेत्रसमूहे । महत् अपरिमितं । तुहिनं हिमं । Expl. In the season of autumn, in the month of भाद्रपद there was all of a sudden a heavy fall of snow while the fields were covered all around with the S'âli grain that was then ripening.

तस्मिन् &c. विश्वक्षयोद्युक्तस्य सृष्टिनाशोद्यतस्य कालस्य यमस्य अट्टहसितोपमे भीषणहास्यतुल्ये । यशसि धवलता वर्ण्यते हासकीर्त्योरितिहासस्य शुभ्रत्वेन कथनात् शुभ्रहिमराशिना सह सादृश्यं द्रष्टव्यं । तस्मिन् तुहिने । शालयो धान्यानि । प्रजानां जीविताशया साकं सार्धं न्यमज्जन् विनाशं जग्मुः । शस्यनाशेन सह प्रजानां जीविताशापि विनष्टा इत्यर्थः । Expl. The masses of snow that appeared like the hoarse laughter of Death bent upon destroying the universe, blighted the Sâli grain and with it the hope of the people's livelihood.

अथासीत् &c. क्षुत्परिक्षामाः अनशनशीर्णाः जना एव प्रेताः नरकवासिनो जीवाः तेषां कुलेन समूहेन आकुलः व्याप्तः । प्राकारः प्रकीर्यते समंतात् स्थाप्यते इति, प्राचीरं । निरयस्य नरकलोकस्य । भोजनाभावात् सर्वत्र कंकालमात्रावशिष्टाः सर्वे जनाः अतिविकृताकाराः लक्ष्यन्ते स्म । नरकप्राकारमध्ये च कंकालदेहाः प्रेताः विचरंतीति सरलातार्थः । Expl. Then there broke out a severe famine, which like the wall of hell, surrounding all around the people famished with hunger, made them appear like the spirits of the dead.

पत्नीप्रीतिं &c. क्षुधा बुभुक्षया उत्तप्तः ज्वलितः पीडितः इत्यर्थः अतएव आतुरः कातरः अन्नाभावात दीनभावापन्नः अखिलः समग्रो जनः निखिलप्रजावृंदं कुक्षिंभरिः स्वोदरमात्रपूरकः । पत्न्यां सहधर्मचारिण्यां भार्यायां प्रीतिः प्रणयः तां भार्याप्रेम । सुतेषु अपत्येषु स्नेह वात्सल्यं तं पितरि जनके दाक्षिण्यं भक्तिः तत् विसस्मार उपेक्षांचक्रे । पुत्रादिसुखापेक्षां अकृत्वैव कृच्छ्रलब्धं यत्किंचिदन्नं स्वयमेव भक्षया-

मास । Expl. Every one, mad with hunger, devoured what he could get, forgetting his love to his wife, affection to child and regard to parents.

क्षामं &c. कण्ठं गलनालीं गताः प्राप्ताः बहिर्गमनोन्मुखाः प्राणाः असवः यस्य सः तं मुमूर्षुमित्यर्थः । क्षामं क्षीणं शीर्णकायामित्यर्थः । याचमानं कातरभावेन अन्नं प्रार्थयमानं सुतं पुत्रं त्यक्त्वा विहाय । वा पक्षान्तरे तादृशं याचमानं पितरं सुतः त्यक्त्वा परित्यज्य तस्य मरणयातनामपि उपेक्ष्य इति यावत् स्वस्यात्मनः पोषणं अन्नादिना स्वदेहरक्षणं चकार । सर्व एव स्वजनान् उपेक्ष्य स्वोदरपूरणार्थं व्यग्रा आसन् इति भावः । स्वजीविताम्न किंचित्प्रियतरं अस्ति, अत एव सर्वसंहारके व्यसने समुपस्थिते लोकस्य स्वत एव स्वजीविताशा प्रबलीभवति इति ज्ञेयं । Expl. Unmindful of the solicitations of his son, weak and dying, the father fed himself, similarly the son did, unmindful of his father.

स्नाय्वस्थिशेषे &c. स्नायवः देहवर्तिनाडीविशेषा च अस्थीनि कंकालाः च त्यान्येव शेषाः तस्मिन् नाडीकंकालमात्रावशिष्टे अत एव बीभत्से जुगुप्सिते विकृतरूपे इत्यर्थः स्वस्यात्मनो देहे शरीरे अहंक्रियावतां अभिमानविशिष्टानां देहिनां शरीरिणां कश्मीरजनानां इत्यर्थः । प्रेतानां नरकस्थानां कंकालशेषाणां भोज्यार्थिनां भोज्यविशेषलाभाय व्यग्राणां क्षुधार्त्तानामित्यर्थः प्राणिनामिव युद्धं विवादः अभूत् । यथा हि नरके प्रेता भक्ष्यविशेषमधिकृत्य परस्परं संग्रामे प्रवर्तन्ते तथैव बुभुक्षवः काश्मीरजनाः दैवादुपस्थितं किंचिद् भक्ष्यमधिकृत्य परस्परं युध्यन्ते स्म । Expl. With selfish interest to their bodies reduced to bare skeletons and disgusting to the sight, men fought with one another for food like so many infernal spirits.

रुक्षाभिभाषी &c. रुक्षाभिभाषी क्षुधोन्मत्ततया परुषवचनः। क्षुत्क्षामः क्षुत्पीडितः । घोरः भयंकरः । अस्थिचर्मावशिष्टत्वाद्विकृतदर्शनः इत्यर्थः। दिक्षु समंतात् अक्षिणी चक्षुषी क्षिपन् व्यापारयन् । सर्वासु दिक्षु आहारान्वेषणाय क्षुधाविस्फारितं नेत्रं सतृष्णं पातयन् इतिभावः। जगतः पृथिव्याः जीवैः प्राणिभिः सर्वप्रकारैरेव जंतुभिः स्वात्मपोषणं निजदेहपुष्टिं इयेष । बुभुक्षातिशयात् जनाः भक्ष्याभक्ष्यवि-

धारणामकृत्वैव जीवमात्रेणैव उदरपोषणमिच्छति स्म । Expl. Oppressed by hunger, speaking hoarse and looking dreadful every individual cast his eyes on every direction, as if eager to satisfy his appetite by destroying every living thing.

तस्मिन्&c. प्राणिनां प्राणाःअसवःविद्यंते येषां ते प्राणिनस्तेषां जीवानां। अतिदुःसहे असह्ये अतिक्लेशकरे इत्यर्थः अत एव घोरे भयंकरे तस्मिन् दुर्भिक्षरूपे महाभये घोरसंकटे उपस्थिते इति शेषः। तस्य लोकोत्तरचरितस्य इत्यर्थः । एव लोकनाथस्य प्रजानां आश्रयभूतस्य राज्ञस्तुंजीनस्यैव इत्यर्थः। करुणार्द्रता दयालुभावः ददृशे जनैरिति शेषः । सर्वेषु तादृशदुःखपीडितेषु राजा केवलं स्वाभाविकं कारुणिकत्वं प्रदर्शितवानित्यर्थः । Expl. At this time of great distress which the people could scarcely endure, the humanity of the king alone was conspicuous.

सपत्नीकः &c. सपत्नीकः सस्त्रीकः भार्यासहायः इत्यर्थः । स राजा तुंजीनः । निजैः स्वकीयैः स्वभुजोपार्जितैरित्यर्थः कोशैः धनैः अपरराष्ट्रजयादिना लब्धैर्वित्तैरित्यर्थः। मंत्रिणां साचिवानां संचयैः संचितधनैः क्रीतं देशांतरात् धनविनिमयेन आनीतमित्यर्थः अन्नं भोज्यं येन सः संगृहीतभक्ष्यराशिः सन्। दिवारात्रं अहर्निशं प्राणिनो लोकान् अन्नाभावेन मुमूर्षूनित्यर्थः। समजीवयत् रक्षितवान् । राजा देव्यासह सर्वदैव सर्वैरुपायैरपि अन्नदानेन प्रजाजीवनं ररक्ष । Expl. The king and qneen fed the people day and night by importing rice (from other countries), defraying the expenses from their own treasury as well as from those of their ministers.

अटवीषु &c, तेन प्रसिद्धेन क्ष्माभुजा भूपतिना अटवीषु।अटन्ति भ्रमन्ति चरमे वयसि अत्र।अरण्येषु रथ्यासु राजमार्गेषु श्मशानेषु ।श्मानः शवाः शेरते अत्र इति "श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते" इति निरुक्तिः। शवदाहस्थानेषु। आवसथेषु वासस्थानेषु च स्थितः इति शेषः। कश्चित् कोऽपि क्षुत्क्षामः अनशनशीर्णः जनः न उपैक्ष्यत परित्यक्तः। Expl. The king took care of every famished individual whether residing in houses or wandering in woods or

streets or in the burning *Ghàts.*

अत: &c. अत: अस्मात्कारणात् सदैवान्नव्ययादित्यर्थः। नि:शेषितानि संपूर्ण व्ययितानि धनानि वित्तानि यस्य स: व्यायितसर्वस्व: राजा इतिशेष: मेदिनीं "मधुकैटभयोरासीन्मेदसैव परिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभि" पृथिवीं क्षीणान्नां अन्नहीनां वीक्ष्यावलोक्य सुदु:खित: प्रजादु:खेन दलितहृदय:। एकदा एकस्मिन्नहनि क्षपायां रात्रौ देवीं वाक्पुष्टामेवं वक्ष्यमाणरूपमूचे उक्तवान्। Expl. One night, when the king found that his treasures were spent, and there was no corn in his country, he was much grieved and said thus to his queen.

देव्यस्मदपचारेण &c. देवि हे महिषि ध्रुवं निश्चितं केनापि अज्ञातस्वरूपेण अस्माकं अपचार: दोष: तेन। कुतोपि पापादेव इत्यर्थ:। निरपराधानां निर्दोषाणां जनानां प्रजानां ईदृशी एवम्प्रकारा। दु:खेन तीर्यते इति दुस्तरा अप्रतीकार्या व्यापत् दुर्भिक्षरूपं लोकक्षयकरं व्यसनं जातोपास्थिता। न खलु राजापराधं अंतरेण प्रजासु दुर्भिक्षाकालमरणादिव्यसनानि जायन्ते अतो ममैव केनाप्यपराधेन घोरमेतत् दुर्भिक्षमुपास्थितमित्यर्थ:। Expl. Surely O queen, for some sins of ours this insurmountable disaster has befallen our innocent people.

धिङ्मां &c अधन्यं हतभाग्यं मां धिक् अहो मे न्यक्कार: इत्यर्थ:। यस्य ममाग्रे पुरत:। अयं मद्राज्यवासी इत्यर्थ:। शोकेन अन्नाभावात् पुत्रादिनिधनजनितेन दु:खेन इत्यर्थ:। पीडित: आकुल: अत एव अनुग्राह्य: अनुकंपनीय: अत्यर्थशोचनीय: इत्यर्थ:। लोक: जनसमूह:। उर्वीं पृथिवीं अशरणां नास्ति शरणं आश्रयो यस्यास्तां प्रजाप्राणसाधनेन शस्येन विहीनामित्यर्थ:। पश्यन् विपद्यते म्रियते इाति यावत्। प्रजापालके स्थितेऽपि मयि प्रजा: अन्नाभावात् अकाले म्रियते अतो मां अभाग्यं धिक् इत्यर्थ:। Expl. Woe is me before whose eyes these people are dying of a distressed and pitiable state, finding this world bereft of all shelter.

प्रजा: &c. यदि इत्यूह्यं। अमुष्मिन् एतस्मिन् वर्तमाने इत्यर्थ:। भये दुर्भिक्षसंकटे। नि:शरणा निर्गतं शरणं आश्रयो याभ्यस्ता:। अन्योन्यं परस्परं। बाधन्वोज्झिता: जनकपुत्रादिभि: स्वजनै: परित्यक्ता: एता: ममाधिकारस्था: प्रजा: प्र-

कृतयः अरक्षिताः अपालिताः मयेति शेषः भवंति । तदा मे जीवितेन प्राणधारणेन किं कार्यं प्रयोजनं प्रजाजीवनरक्षणासमर्थस्य राज्ञः जीवनधारणं निष्फलमेव इति भावः । Expl. All my people have become helpless as well as friendless to one another, and since I cannot save them in this calamity, what is the use of my living?

अतिक्रांतप्रभावा &c. कालस्य समयस्य अस्य दुर्भिक्षकालस्य इत्यर्थः । दौरात्म्येन क्रूरतया पीडिताः । अथ वा अभिभूता अनशनेन नितरां अवसन्ना इत्यर्थः । अतिक्रांतः विनष्टः प्रभावः शस्योत्पादनशक्तिः यस्याः सा नष्टशस्योत्पादनशक्तिः । अत एव हृतं दैवेनापहृतं गौरवं माहात्म्यं यस्याः सा अपहृतसारा इत्यर्थः । इयं एषा मदधीना पृथिवी धरित्री कश्मीरराज्यमिति भावः । अथ अधुना निष्किंचना निर्धना निःशेषितधनधान्यादिका इति यावत् संजाता संभूता । समग्रोयं देशः शस्यहीनतया अतीवशोचनीयां दशां संप्राप्तः इति भावः। Expl. Oppressed by the severity of time, the earth is now deprived of all her power and glory and is reduced to a most destitute state.

तदिमा &c. तत्तस्मात् कतमः कीदृशः उपायः पन्थाः । दारुणे भीषणे अतिकष्टकरे इत्यर्थः । व्यसनार्णवे संकटसमुद्रे दुस्तरव्यसने इत्यर्थः । सर्वतः सम्यग्रूपेण, सर्वत्र वा । मग्नाः पतिताः इमाः एताः प्रजाः प्रकृतीः समुद्धर्तुं तारयितुं क्षमः समर्थः । संप्रति केनोपायेनाहं प्रजाः विपदः परित्रातुं शक्नुयामिति भावः। Expl. What means are left to deliver these people overwhelmed all around with terrible calamity?

निरालोकाः &c. दुर्दिनेन मेघान्धकारेण ग्रस्तः उपरुद्धः भास्करः सूर्यः यत्र स अन्धकारावृतसूर्यः अत एव निरालोकः निर्गतः आलोको यस्मात् आलोकशून्यः अयं एष लोकः भुवनं कालरात्रीणां सर्वभूतसंहारिणीनां घोराणां कल्पांतनिशानां कुलैः समूहैः विश्वक् । विश्वं अंचतीति । समंतात् परीतः अभिव्याप्तः इव वर्तते तिष्ठति । Expl. The sun being eclipsed by clouds, this country has become deprived of all light, and appears as if enveloped into nights of universal destruction.

हिमसंघात &c. जनाः लोकाः हिमानां तुहिनानां संघाता राशयः तैः दुर्लंघ्याः अनतिक्रमणीयाः क्षितिभृतः पर्वताः तैः रुद्धाः निवारिताः निर्गमाः निष्क्रमणमार्गाः येषां ते पर्वतैरवरुद्धपलायनमार्गाः इत्यर्थः । अत एव बद्धं रुद्धं द्वारं निर्गममार्गो यस्य तत् बद्धद्वारं कुलायं नीडः तस्मिन् तिष्ठन्तीति बद्धद्वारकुलायस्थाः तादृशाः खगा पक्षिणः ते इव । निरुद्धद्वारस्य नीडस्य गर्भस्थिताः पक्षिण इव इत्यर्थः । विवशाः विगतः वशः स्वाधीनभावो येषां बद्धहस्तपदा इव सर्वथा अशक्ताः वर्तन्ते । Expl. The mountain passes being blocked up with masses of snow, there is no way left for people to go out of the country, and so they have become totally helpless like birds confined within their nests whose openings are shut up.

शूराश्च &c. शूराः बलशालिनः च मतिमंतः बुद्धिमंतः प्रज्ञाशालिनः इत्यर्थः । विद्यावन्तः विद्वांसः शास्त्रज्ञानसंपन्नाश्च इत्यर्थः । जंतवः प्राणिनः जना इति यावत् । कालस्य दुर्भिक्षसमयस्य दौरात्म्यं क्रौर्यं तस्मात् । निहता विनष्टा योग्यता शक्तिर्येषां ते निरुपायाः इत्यर्थः । जाताः संवृत्ताः पश्य अवलोकय । दुर्भिक्षपीडया सर्वे एव तुल्यरूपं दीनभावं गता इत्यर्थः । Expl. See ! the men, the heroic, the wise and the learned have been made powerless by the devastating influence of time.

तदेष &c. तत्तस्मात्कारणात् । गलिताः विनष्टाः उपायाः दुर्भिक्षप्रतिविधानमार्गा यस्य सः नष्टसामर्थ्यः इत्यर्थः । एष शोचनीयावस्थः इत्यर्थः । अहं ज्वलनेऽग्नौ तनुं शरीरं जुहोमि निक्षिप्य दहामि । प्रजानां प्रकृतीनां ईदृशं अन्नाभावात् शोचनीयं । नाशं निधनं द्रष्टुमवलोकयितुं न तु समर्थः शक्तः अस्मि भवामि अहमिति शेषः - प्रजाविनाशं सर्वथा वारयितुमशक्तस्य प्रजागतप्राणस्य मम मरणमेव शरणमितिः भावः । Expl. Let me perish in the flames since I have no means left; I am unable to see this destruction of my subjects.

धन्यास्ते &c. ये पृथिवीपालाः राजानः पुत्रान् स्वतनयानिव आत्मजानिव प्राणप्रियतमानित्यर्थः । पौरान् पुरवासिनः प्रजाः इत्यर्थः। सर्वतः सर्वप्रकारेण निर्वृतान् उपद्रवाभावात् सुखिनः इति यावत्। पुरः अग्रतः वीक्ष्य दृष्ट्वा । निशि रात्रौ

सुखं निरुद्विग्नं यथास्यात्तथा शेरते स्वपंति स्वच्छन्दं निद्रासुखमनुभवान्ति इत्यर्थः। ते तादृशाः धन्याः परमसौभाग्यशालिनः उच्यन्ते इति शेषः। मातरो यथा अंकगतान् शिशून् सर्वथा सुस्थितान् दृष्ट्वा निश्चिंतं विश्राम्यन्ति सौभाग्यवन्तो राजानोपि तथा अधिकृतान् जनान् सर्वथा स्वस्थान् दृष्ट्वा सुखेन विश्राम्यन्ति। मंदभाग्यस्य मे तादृशं सौभाग्यमपि नास्तीति अभिप्रायः। Expl. Blessed are those kings who seeing on all sides their subjects as their children at ease, can pass their nights in peace.

इत्युक्त्वा &c. पृथिवीपतिः अवनीपः करूणया दयया आविष्टः सन्। इत्युक्त्वा एवमाभाष्य। मुखं वदनं वाससा उत्तरीयवस्त्रेणाच्छाद्य आवृत्य। तल्पे शय्यायां निपत्य शयित्वा निःशब्दं नीरवं यथा तथा रुरोद अश्रूणि मुमुचे। Expl. Thus saying, overcome by compassion, the king fell on his bed, and covering his face with cloth began to weep silently.

निर्वातस्तिमितैः &c. अथ अनंतरं राज्ञस्तदवस्थादर्शनानन्तरमित्यर्थः। निर्नास्ति वातः वायुसंचारो यस्मिन् तत् निर्वातं गृहं तस्मिन् स्तिमिताः निश्चलशिखाः तैः शय्यागृहस्य वायुसंचाररहितत्वात् निश्चलोर्ध्वशिखैरित्यर्थः। अत एव कौतुकात् कौतूहलात्। देवी किं वा वदतीति तन्मुखदर्शनलालसया इत्यर्थः। उत् ऊर्ध्वं गताः ग्रीवाः येषां ते तैः उन्नमितशिरोभिरिव दीपैः प्रदीपैः वीक्ष्यमाणा दृश्यमाना। देवी महिषी जगतीं पृथिवीं भुनाक्ति रक्षतीति तं राजानं जगाद बभाषे। Expl. There was no wind, and the lamps burning steadily with their tapering flames, seemed as if watching the qneen with curiosity while she addressed the king.

राजन् &c. हे नृपते, प्रजानां प्रकृतीनां व्यसनैः विपद्भिः दुर्भिक्षजनितैः दुःखैरित्यर्थः। अयं एष मरणव्यवसायरूपः। कः कीदृशः मतिविपर्ययः बुद्धिविकारः। तव जातः इति शेषः। येन हेतुना इतर इव प्राकृत इव नीचजन इवेत्यर्थः। स्वैरं स्वच्छन्दं अधीरस्य उद्भ्रान्तचित्तजनस्य उचितं उपयुक्तं भ्रांतबुद्धिजनोपयुक्तं आत्महत्याकार्यमिति शेषः। ईहसे कर्तुमुद्युक्तोसि त्वमिति शेषः। आत्महत्या सर्वस्यामेवावस्थायां सर्वेषामेव सर्व-

था अकार्यमिति भावः। Expl. Lord, how the misfortune of your subjects has turned your sense that you behave like a vulgar man losing all your patience?

यद्यसाध्यानि &c. महीपाल हे राजन् यदि चेत् असाध्यानि अन्यैः अनिवार्याणि दुःखानि व्यसनानि। छेत्तुं निराकर्तुं अपनेतुमित्यर्थः। न प्रभविष्णुता सामर्थ्यं भवेदितिशेषः। तत् तदा महतां महाप्रभावाणां त्वादृशानां जनानामित्यर्थः। महत्त्वस्य श्रेष्ठत्वस्य माहात्म्यस्य इत्यर्थः। किमन्यत् कीदृशं अंकनं लक्षणमस्ति इति शेषः न किमपीत्यर्थः। यदि प्राकृता इव महान्तोपि विपदि अवसीदंति तदा प्राकृतमहतां को भेदः इति भावः। *Cf.* द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेपि ते चलाः इति रघुवंशे। असाध्यसाधनमेव महतो लक्षणामिति भावः। Expl. If the great men also frail to avert the evils that ordinary man cannot remedy, then what, O king, would be the mark of greatness of those who are trully great?

कः शक्रः &c.—सत्यं सत्यपालनं व्रतं पवित्रो धर्मो येषां सत्यव्रतानां सत्यधर्मपराणां भूपानां राज्ञां। शासनस्य आदेशस्य लंघनं अतिक्रमं कर्तुं विधातुं आज्ञामुल्लंघयितुमित्यर्थः। शक्रः इन्द्रः कः नकोपीत्यर्थः। न समर्थः इति भावः स्रष्टा विधाता ब्रह्मा कतमः न समर्थः इत्यर्थः। वराकः दीनः कर्मानुरूपफलप्रदायित्वात्स्वयं किमपि कर्तुमक्षमः इति भावः। यमः शमनः कतमः न कथमपि शक्तः इत्यर्थः। भवतीति क्रियापदं सर्वत्र ऊह्यं। सत्यनिष्ठानां राज्ञां आज्ञां सर्वेश्वरा अपि देवाःसावधानं पालयन्तीति भावः। Expl. Who indeed is Indra, the Creator or even Death that he should presume to violate the behest of those kings who are firm in the path of truth?

पत्यौ भक्तिः &c. पत्यौ स्वामिनि भक्तिः अकपटं प्रेम। स्त्रीणां नारीणां व्रतं श्रेष्ठः धर्मः। अद्रोहः अनिष्टबुद्धेरभावः नियताहितानुध्यानमिति यावत्। मंत्रिणां सचिवानां व्रतं अवश्यकर्तव्यं कर्म। प्रजानां प्रकृतीनां अनुपालनं विपद्भ्यः संरक्षणं तस्मिन् नास्ति अन्यत् कर्म येषां ते अनन्यकर्माणः तेषां भावः अनन्यकर्मता एकाग्रचित्तता। भूभृतां नृपाणां व्रतं परमो धर्मः इति शास्त्रकारैः कथ्यते इत्यर्थः। अभिषिक्तस्य राज्ञः नीत्या प्रजापालमेव परमो धर्मः इति भावः।

Expl. The sacred vow of women is, to love their husbands, that of ministers, to remain faithful to their lords, and that of kings, to protect their subjects without deviating their attention to any other affair.

उत्तिष्ठ &c.—व्रतिनः धार्मिकाः तेषां अग्र्य अग्रगण्य, श्रेष्ठ, उत्तिष्ठ शयनात् उत्थाय स्वकर्तव्यपालने सर्वात्मना यतस्व इति भावः। मम वचः वाक्यं क कुत्र विपर्येति विपर्ययं वैपरीत्यं प्राप्नोति। न कदापि विफलं भवतीत्यर्थः। प्रजापाल जनाधिप ते तव प्रजानां प्रकृतीनां क्षुधा बुभुक्षया कृतं जनितं भयं भीतिर्नास्ति न विद्यते एव। अद्य प्रभृत्येव ते प्रजानां दुर्भिक्षभयं निरस्तमेव मन्यस्व इति भावः। Expl.—Arise, O foremost of the righteous! my words are never spoken in vain; O protector of the people, the distress of your subjects, caused by famine, is over.

इति संरम्भतः &c. तया देव्या वाक्पुष्ट्या देवताः इष्टदेवताः अनुध्याय हृदि भक्त्या स्मृत्वा। संरम्भतः उत्साहेन सोत्साहमित्यर्थः। इष्टदेवताध्यानजन्येन विश्वासेन इति भावः। इति एवं पूर्वोक्तरूपमित्यर्थः। प्रोक्ते कथिते सति। प्रतिगेहं प्रतिगृहं गतप्राणः विनष्टासुः कपोतनिवहः पारावतसमूहः अपतत् पपात। भक्त्या इष्टदेवानाहूय देव्या उक्तमात्रमेव तस्या वचनं सद्य एव सफलमभूदिति सरलार्थः। Expl. When the queen uttered these words with excitement, after fixing her thoughts on the deities, dead pigeons dropped down in every house.

प्रातस्तन्नृपतिः &c.—नृपतिः राजा प्रातः प्रभाते तत् प्रजाभोजनसाधनं पतितकपोतरूपं आश्चर्यमित्यर्थः। वीक्ष्य दृष्ट्वा मरणोद्यमात् मृत्युसंकल्पात् अग्निप्रवेशनिश्चयात् इति यावत्। व्यरंसीत् विरतो बभूव। प्रजाः प्रकृतयः प्रत्यहं अहरहः प्राप्तैर्लब्धैः कपोतैः पारावतैः जीवितं जीवनं दधुः धारयामासुः। Expl. The king saw this in the morning and relinquished his intention of committing suicide, and the people saved their lives by means of the pigeons thus obtained every day.

वस्त्वन्तरं &c.—नूनं निश्चितं साध्वी पतिव्रता सा वाक्पुष्टा जनतायाः जनसमूहस्य जीवितं जीवनं तस्याप्तिः रक्षा तस्यै प्रजाजीवनरक्षायै तत् मृतकपोतरूपं किमपि अनिर्वचनीयं अन्यत् वस्तु वस्त्वन्तरं कपोतरूपेण दृश्यमानमपि कपोतभिन्नं किमपि द्रव्यं ससर्ज सृष्टवती स्वप्रभावेणोत्पादयामासेत्यर्थः। ते कपोतरूपेण दृश्यमानाः प्रजाजीवनोपायास्तु। कपोताः पारावताः नाभवन् नासन्। तस्याः साध्व्याः प्राणिहिंसायाः असंभवात् मृतकपोतरूपं तत् किमपि प्राणिभिन्नं अन्यदेव द्रव्यं तया सृष्टं इति सरलभाषा। Expl. In sooth, they were not pigeons, but some extraordinary objects created by the virtuous queen in order to protect the lives of her people.

तादृशां नाहि &c. नास्ति व्याजः कापट्यं यस्मिन् तत् निर्व्याजं अकृत्रिमं प्राणिषु जीवेषु कारुण्यं दया तेन शालन्ते शोभन्ते इति तेषां जीवेषु अकृत्रिमदयावतीनामित्यर्थः। तादृशां वाक्पुष्टासदृशीनां पतिव्रतानामित्यर्थः। धर्मस्य धर्मकर्मणः चर्या अनुष्ठानं तस्याः धर्माचरणस्य चापि। हिंसया प्राणिवधप्रवृत्या कलंकनं दूषणं न शक्यं न साध्यं। पुण्यवतां पुण्यकार्ये न हि प्राणिवधमाश्रित्य प्रवर्तते इति भावः। Expl. For, the pious work of those, who are trully compassionate on all living creatures, cannot be defiled by any injurious act.

अभवन्निर्मलं &c. देवीकृत्यैः वाक्पुष्टाधर्माचरणैः सह व्योम आकाशं क्रमात् क्रममाश्रित्य प्रतिदिनमित्यर्थः। निर्मलं प्रसन्नं दुर्दिनादिशून्यं अभवत् बभूव। भूपालशोकेन नृपदुःखेन प्रजामृत्युजनितविषादेन इत्यर्थः। साकं सार्धं। भिक्षायाः अभावः दुर्भिक्षं अन्नकृच्छ्रं च शमं शांति ययौ प्राप। यथा देव्याः धर्माचरणं वबृधे तथाकाशं निर्मलं बभूव यथा च दुर्भिक्षं क्रमशो नाशमियाय तथा तथा राज्ञश्च शोकः निवृत्तिमाप इति सरलभाषा। Expl. The sky cleared up as the righteous acts of the queen progressed, and the famine too, disappeared and with it the affliction of the king.

वर्षैः &c.—षडधिका त्रिंशत्तया षट्त्रिंशत्संख्यकैरित्यर्थः। वर्षैः वत्सरैः पत्यौ स्वामिनि महाराजे शान्ते शांति गते मृते सतीत्यर्थः। तया वाक्पुष्टया ज्वलनस्य चिताग्नेः

ज्वाला: शिखा: ता एव नलिनस्य कमलस्य प्रच्छदः आस्तरणं तस्मिन् चिताग्निशिखारूपे पद्मास्तरणे इत्यर्थः। सहमरणप्रीत्या सुखस्पर्शपद्मास्तरणवत् प्रतीयमाने चिताग्नौ, इति भावः। विरहज्वरः पतिवियोगजः ज्वरः संतापः तत्यजे अपनीतः। पतिसहमरणेन स्वदेहं अग्नौ भस्मीचकार इत्यर्थः। Expl. The King died after a reign of thirty-six years and the queen extinguished her sorrows caused by the death of her husband by ascending the funeral pile as if it were a bed of lotuses to her.

सा यत्र &c. यत्र यस्मिन् स्थाने शुचि पवित्रं चारित्रं स्वभावः यस्या निर्मलस्वभावा सा वाक्पुष्टा। विपन्नं मृतं पतिं स्वामिनं अन्वगात् अनुययौ सहमरणेनेत्यर्थः। अद्यापि अधुनापि तत्प्रसिद्धं स्थानं जनैः लोकैः काश्मीरनिवासिभिरित्यर्थः। वाक्पुष्टाटवी वाक्पुष्टया प्रसिद्धिं प्रापिता अटवी इति तन्नाम्ना प्रसिद्धाटवी गद्यते कथ्यते पुण्यचारित्राया स्तस्याद्यापि पुण्यकीर्तिः काश्मीरे विद्यते इति भावः। Expl. The place, where the virtuous queen burned her-self with the corpse of her husband, is called वाक्पुष्टाटवी by the people even to this day.

वाक् सूनृता &c. सूनृता सत्या प्रिया च वाक् वचनं। दया परदुःहरणेच्छा। दानं सत्पात्रे अर्थस्य विनियोगः। दीनाः दुःखपीडिता उपगताश्च तेषां रक्षणं. भयहेतुभ्यस्त्राणं। सतां साधूनां संगः सहवासः हि निश्चयेन इति एवं। एतत् पूर्वोक्तरूपं। साधु सुप्रशस्तं। संतः साधुचरिताः पुरुषा जनाः तेषां व्रतं स्वभावासिद्धः पवित्रः आचारः। Expl. Speaking sweet and truthful words, affording shelter to those who are afflicted and needy, and association with the good, are the vows of the honest.

न तेभ्यः &c. ये जनाः दुःखं विषाद एव पंकः कर्दमः तस्यार्णवे समुद्रे अतिदुस्तरे दुःखे इत्यर्थः। मग्नं पतितं दीनं निराश्रयं जनं अभ्युद्धरन्ति संतारयन्ति विपभ्द्यः त्रायन्ते इत्यर्थः। अभ्यधिकाः महत्तमाः श्रेष्ठगुणसंपन्ना इत्यर्थः। सन्तः साधुचरिताः पुरुषाः जनाः तेषां व्रतैः आचरणैः सूनृतवागादिभिरित्यर्थः उपलक्षिताः। सन्तः साधवः न संति न विद्यन्ते। दीनोद्धरणमेव साधूनां श्रेष्ठो धर्म

इत्यर्थः । Expl. those that deliver the poor, overwhelmed with great distress, are to be regarded as the greatest of men devoted to deeds of virtue.

आविष्ट इव &c. गरीयसा गुरुतरेण अतिमहता इत्यर्थः । हृदि हृदये गतं प्रविष्टं तेन चित्तगतेन दुःखेन क्लेशेन आविष्टः आक्रान्तः इव नितरां अभिभूतः इव इत्यर्थः । परदुःखं आत्महृदये निजदुःखमिव अनुभूय तेन अतिमात्रं विकलः सन् इति भावः । परया अतिशयितया करुणया दयया समन्वितः आर्द्रीभूतः सन् जनः इति शेषः । दीनं निराश्रयं विपद्ग्रस्तं जनं उद्धरेत् संतारयेत् विपद्भ्यः त्रायेत । परेषां विपदं निजविपदमिव मत्वा तदुद्धाराय यतेत इतिभावः । Expl. Being moved by the dire distress of others and overcome with feelings of compassion one should deliver the distressed.

आधिव्याधिपरीताय &c. आधयः च मनःपीडा व्याधयः रोगजराद्याः च तैः परीतः व्याप्तः तस्मै दुःखरोगादीनां आधाराय । अद्य श्वः परेद्युः वा, विनाशिने विनाशशीलाय क्षणस्थायिने इत्यर्थः । शरीराय देहाय शारिरं सुखं सम्पादयितुमित्यर्थः । को हि नाम को बुद्धिमान् न कोपीत्यर्थः । धर्मात् पुण्याचरणात् भ्रष्टं अधर्ममित्यर्थः । समाचरेत् अनुतिष्ठेत् । क्षणविध्वंसिनः शरीरस्य कृते पापाचरणं सर्वथा विगर्हितं इति भावः। Expl. Who would depart from the path of virtue for the sake of this body which is full of pains and diseases and may perish today or tomorrow ?

जलान्तश्चन्द्रचपलं &c. खलु निश्चितं देहिनां शरीरिणां प्राणिनामित्यर्थः । तथाविधं तादृशं क्षणभंगुरमित्यर्थः । जीवनं जीवितं जलस्य सलिलप्रवाहस्य अन्तर्मध्ये यः चन्द्रः चन्द्रबिम्बं तद्वत् चपलं चंचलं इति एवं ज्ञात्वा विदित्वा जीवनस्य तथा अस्थिरत्वं तत्वतः परिज्ञाय इत्यर्थः । शश्वत् निरंतरं कल्याणं मङ्गलं दानादि सत्कर्म इत्यर्थः । आचरेत् अनुतिष्ठेत् जनः इति शेषः । Expl. Knowing that the life of mortals is as unsteady as the image of moon reflected in water, we should always perform virtuous acts.

जगत् &c. इदं परितो दृश्यमानं जगत् विश्वं मृगतृष्णायाः मरीचिका-

या: सौरकरेषु जलभ्रान्तेरित्यर्थः। तुल्यं सदृशं असत्यमिति यावत् ।क्षणेन मुहूर्तेन भंगुरं विनाशि अचिरस्थायि वीक्ष्य दृष्ट्वा धर्माय धर्मार्जनाय सुखाय परमानन्दलाभाय इत्यर्थः। सुजनैः साधुभिः संगतं सहवासं कुर्यात् विदधीत जनः इति शेषः। साधुसंगलभ्यः धर्मानंद एव संसारे नित्यः अन्यत: सर्वमनित्यं इत्यर्थः। Expl. Knowing this world to be transient like a mirage we should associate with the pious that we may attain virtue and bliss.

हिमांशुमाली &c. सन्तः साधवः जनाः लोकाः तेषां चेष्टितम् आचरणम् यथा यादृक्। चेतांसि हृदयानि आनंदयाति आह्लादयति। हिमानां शिशिराणां अंशूनां किरणानां माला श्रेणी विद्यते अस्य सः चन्द्रः न तथा आनंदयतीति शेषः। उत्फुल्लानि विकासितानि उत्पलानि पद्मानि यस्मिन् तत् विकचनलिनशोभितं सरः सरोवरश्च न तथा आनंदयतीति शेषः। इह जगाति साधुचरित्रादधिकं मनोहरं न किंचिदस्तीति भावः। Expl. Neither the moon with her rays of nectar, nor a lake with its full blown lotuses, can impart so much delight to the heart as the behaviour of the virtuous.

विभूतीः&c. परमाः उत्कृष्टाः विभूतीः विभवान् प्राप्य लब्ध्वा। सतां साधूनां संभोग्यतां संभोगविषयतां नयेत् प्रापयेत् जनः इति शेषः। प्राप्तस्य धनस्य साधुजनभोगाय यथाशक्ति विनियोगं कुर्यात् इत्यर्थः। यासु विभूतिषु सन्तः न तिष्ठन्ति प्रतिष्ठां न लभन्ते। ता तादृश्यः साधुसंभोगविरहिताः इत्यर्थः। विभूतयः ऐश्वर्याणि वृथा निष्फलाः एव भवन्ति इति शेषः। साधुसंभोग संपादनेनैव संपदां सफलत्वं भवतीति भावः। Expl. Obtaining great fortune, one should make it over to the enjoyment of the virtuous, the fortune, which does not maintain the virtuous, is worth nothing.

विश्राम्यन्ति &c. महात्मानः उदाराशयाः साधवः इति यावत् कल्पाख्यस्तरुः तस्मिन् सर्वकामप्रदे देववृक्षे इव देवतरुमाश्रित्य इवेत्यर्थः। यत्र यस्मिन् जने यं जनमाश्रित्य इत्यर्थः। विश्राम्यन्ति विश्रामं लभन्ते यस्य संपत्संभोगेन परमां शांन्तिमनुभवन्ति इत्यर्थः। सः तादृशः श्रीमान् सौभाग्यवान् पुरुषः साधुसुखसंपादनेन सफलजीवनः इ-

त्यर्थः। श्लाघ्यं स्पृहणीयं यथा तथा। जीवति प्राणान्धारयति तादृशस्यैव जनस्य जीवनं धन्यमित्यर्थः यतः सतां साधूनां संभोगः सुखानुभूतिः एव फलं प्रयोजनं यासां ताः सज्जनोपकारार्थाः एव इत्यर्थः। श्रियः संपदः भवन्तीति शेषः। श्रियां फलं एतदेव यत्ताः सद्भिःसंभुज्यन्ते इतिभावः। Expl. Blessed is the life of that man of fortune who like a tree of plenty, is a rest unto those that are noble; for the end of fortune is for the virtuous to enjoy.

असद्भिः &c. असद्भिः दुष्टचरितैः असतां असच्चरितानां एव जनानां नतु साधूनामित्यर्थः। धनानि वित्तानि एव संपदः ऐश्वर्याणि भुज्यन्ते उपसेव्यन्ते ध्वांक्षाः काकाः किंपाक एव वृक्षः तस्य महाकालवृक्षस्य फलं अतिनिकृष्टमित्यर्थः। भक्षन्ति भुज्यंते। इतरे अन्ये कोकिलादयः पक्षिणः न भक्षन्तीति शेषः। निकृष्टफलं काकानामिव असतां धनं दुर्जनानामेव उपभोग्यमिति सरलभाषा। Expl. The riches of the wicked are enjoyed by the wicked alone; none but the crows do eat the fruits of the किंपाक tree.

ग्रीष्मसूर्य &c. ग्रीष्मस्य निदाघस्य अंशवः किरणाः तैः संतप्तं उत्तप्तं प्रचंडातपेन अभितप्तत्वात् अतिदुश्चरमित्यर्थः। उद्वेजनं उद्वेगकरं घोरसंतापकमित्यर्थः। अनाश्रयं आश्रयशून्यं तरुलताजलाद्यभावात् आश्रयस्थानशून्यमित्यर्थः। मरोः निर्जलवालुकामयदेशस्य स्थलं इव तादृशीं मरुभूमिं यथा परित्यजेत् तथा उदग्रं अतिभीषणं दुर्जनैः असद्भिः सह संगतं संसर्गं त्यजेत् परिहरेत् जनः इति शेषः। मरुमयप्रदेशः इव अतिभीषणो दुर्जनसंसर्गः सर्वथा त्याज्यः इति भावः। Expl. The company of the wicked should be avoided like a desert heated by the rays of the summer sun, intensely painful and bereft of all shelter.

असाध्यं &c. साधवः महोपकारका मंत्राः उपदेशाः तेषां, पक्षे साधवः विषघ्नत्वात् संजीवनाः मन्त्राः विषनाशकमंत्रविशेषाः तेषां असाध्यं अप्रतिविधेयं न खलु दुर्जनाः सदुपदेशशतैः अपि दुष्टतां त्यजन्ति इतिभावः। तीव्रं अनिष्टजनकत्वात् भीषणं, पक्षे प्राणहानिकरत्वात् अतितीक्ष्णं वाक् वचनमेव विषं गरलं उत्सृजन् उद्गिरन् दुष्टः क्रूरः हिंस्रस्वभावत्वादिर्थः दुर्जनः असज्जनः एव पन्नगः पन्नगः पभ्यां

न गच्छतीति अथवा पन्नं वक्रं गच्छतीति सर्पः। दुर्जनरूपः सर्पः। द्वे प्रत्यक्षे प्रियवादित्वात् परोक्षे अहितकारत्वात् कार्यद्वयसाधिके सर्पपक्षे विभक्ते जिह्वे रसने यत्र तत् जिह्वाद्वयविशिष्टं वदनं मुखं धत्ते धारयति। "परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनं॥ वर्जयेत् तादृशं मित्रं विषकुंभं पयोमुखं॥" इतिभावः। Expl. The wicked man like a surpent has a mouth with two tongues in it, out of which he vomits poison-like words which are fierce and which cannot be checked by good advice (as poison cannot be subdued by मंत्राः).

तीव्राणि &c. अनयः अविनयः आत्मा स्वभावो येषां ते अनयात्मकाः तैः आविनीतस्वभावैः दुर्जनैरित्यर्थः। विसृष्टानि उदीरितानि, पक्षे निक्षिप्तानि तीव्राणि परुषाणि अतिकठोराणि इति यावत्। पक्षे शाणितानि उद्वेगं उत्कण्ठां पक्षे छेदनभयं कुर्वन्ति इति अतिभीषणानि वचांसि वाक्यानि। शस्त्राणि अस्त्राणि इव। देहिनां शरीरिणां मनुष्याणामिति यावत्। मर्म हृदयबन्धनं कृन्तति छिंदन्ति। शत्रूणां शाणितानि अस्त्राणीव खलानां वाक्यानि साधूनां मर्मपीडाकराणि भवन्तीति सरलभाषा। Expl. Like a whetted sword, the words of the wicked, which are acrid and pain-giving, cut the hearts of men.

प्रियं तथ्यं च &c. प्रियं प्रीतिकरं हृदयानन्दकरमित्यर्थः। तथ्यं यथार्थं सत्यमित्यर्थः। पथ्यं हितकरं धर्मः सर्वदुःखनिवृत्तिकरं कल्याणं अर्थः प्रयोजनं यस्य तत् धर्मप्रयोजकमेव नान्यादित्यर्थः। वचनमिति शेषः। वदेत् ब्रूयात् जनः इति शेषः। अश्रद्धेयं श्रद्धातुमयोग्यं अविश्वास्यमित्यर्थः। असभ्यं न सभायां साधु इति अभद्रोचितं अश्लीलमित्यर्थः। परोक्षं अक्ष्णां परः इति अप्रत्यक्षं प्रत्यक्षतो न ज्ञातमित्यर्थः। कटु कर्कशं श्रुतिकठोरमिति यावत् वचनमिति शेषः। उत्सृजेत् परित्यजेत् न ब्रूयादित्यर्थः जनः इति कर्तृपदमूह्यं। 'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियं' इति भावः। Expl. A man should utter only words which are sweet, true, useful and pious, and avoid uttering words which are unworthy of credence, indecent, and by which a man is abused behind his back.

हृदि विद्ध इव &c. यया यादृश्या वाचा इत्यर्थः। जन लोकः हृदि मर्मणि विद्धः आहतः इव शल्यादिना आहतहृदय इवेत्यर्थः। अत्यर्थं अतिशयेन संतप्यते पीड्यते मेधावी बुद्धिमान् जनः पीडितः व्यथितः भृशं अवमानितोऽपि इत्यर्थः। तां तादृशीं मनस्तापदायिनीमित्यर्थः। वाचं वाक्यं न उदीरयेत् कथयेत मनस्तापकरं वाक्यं सर्वथा परिहरेदित्यर्थः। Expl. A wise man even though greatly oppressed should not utter words which would sorely afflict the oppresser's heart.

प्रियमेव &c. सत्सु साधुषु मित्रेषु इति वा। द्विषत्सु शत्रुषु च प्रियं प्रीतिकरं मधुरवचनमेव नित्यं सर्वदा अभिधातव्यं भाषितव्यं जनेन इति शेषः। केकया मयूरवाण्या मधुरः रमणीयः मधुरकण्ठः शिखी मयूरः इव, प्रिया मधुरा वाक् वचनं यस्य प्रियंवदो जनः कस्य जनस्य न प्रियः प्रीतिकरः भवतीति भावः। Expl. A man should use sweet words towards friend and foe alike. The man who speaks sweet words, like the sweet-voiced peacock, is dear to all.

ये प्रियाणी &c. ये जनाः प्रियाणि मधुराणि प्रभाषन्ते कथयन्ति सत्कृतिं सत्कारं साधुजनसंमानं प्रयच्छंति ददाति। श्रीमन्तः सौभाग्यशालिनः अनिंद्यं प्रशस्तं चरितं स्वभावो येषां ते तादृशाः महानुभावाः जनाः इत्यर्थः। नरस्य मनुष्यस्य इव विग्रहः शरीरं येषां ते मानवदेहधारिणः देवाः सुराः कथ्यन्ते इति शेषः। तादृशा जनाः मनुष्यदेहं धारयन्तोऽपि नूनं देवस्वभावाः इत्यर्थः। Expl. The fortunate men of blameless character who always speak sweet words and honour all, are gods in a human form.

शमं नयति &c. सर्वेषां विश्वजनानां बंधुः सुहृत् सर्वत्रैव मित्रभावापन्नः इत्यर्थः। अमत्सरी अक्रोधनः अन्यशुभद्वेषशून्यो वा। भीतानां विपन्नानां आश्वासनं प्रबोधनं सांत्वनाप्रदानं इत्यर्थः। करोतीति भीताश्वासनकृत् विपन्नानां अभयदाता सर्वभूतदुःखमोचने नियुक्तः इति भावः। यः साधुः सज्जनः। क्रुद्धान् क्रोधाविष्टान् जनानित्यर्थः। शमं शांति नयति प्रापयति हितमधुरभाषणादिना क्रुद्धस्य क्रोधमपनयतीत्यर्थः। तस्य तादृशस्य महात्मनः स्वर्गः स्वर्लोकप्राप्तिः। अल्पकं तुच्छं फलं लाभः भवती-

ति शेषः। सर्वभूतहिते रताः सर्वत्र मित्रभावापन्नाः रागद्वेषादिशून्याः साधवः स्वर्गादपि उच्चतरं स्थानं अर्हन्तीति विशदार्थः । Expl. Heaven is a trifling reward for the virtuous man, who can pacify him who is angry, who is every body's friend, who is free from envy and who dispels the fears of him who is in danger.

पापे &c. मैत्रि सर्वभूतेषु मित्रभावः तथा द्रवं द्रवीभूतं अन्तःकरणं हृदयं यस्य सः सर्वभूतेषु प्रेमवानित्यर्थः। पापे अनिष्टकारिणि अपि जने । अपापः हितकारी यः जनः परुषे कटुभाषिणि अपि जने इति शेषः। प्रियाणि मधुरवाक्यानि अभिधत्ते कथयति । तस्य तादृशस्य जनस्य मुक्तिः मोक्षः सर्वदुःखात्यंतनिवृत्तिरुपं निर्वाणं इत्यर्थः । करे हस्ते स्थिता आयत्ता तादृशो जनः तपोयोगादिसाधनं विनापि मुक्ति मोक्षं लभते इत्यर्थः। स जीवन्नेव सर्वदुःखविमुक्तः इतिभावः । Expl. Salvation is within the grasp of him who behaves sinlessly towards the sinful, who answers harsh words with words full of love, and whose heart is melted with universal benevolence.

भारती *f.* Learning, education, the Goddess of learning.

व्ययतो—वृद्धिमायाति— Increases when it is imparted to &c.

कोऽपि—अनिर्वचनीयः ।

अनेकसंशयोच्छेदि—Removing various doubts.

अनर्घ्यत्वात्—On account of its high price.

हर्तुर्न गोचरं याति-It does not come into the range of the sight of a thief.

किमन्यत् विद्यया समं—what is likely equal to learning.

न भ्रातृभाज्यं-Cannot equally be divided among brothers.

सर्वधनप्रधानम्— Excels all earthly riches.

कल्पलता *f.* All-yielding tree.

अनागतविधातृ *m.* Disposer of the future, provident.

श्रीरुपतिष्ठति.-The Goddess of fortune attends upon &c.

पिठर *adj.*-A pot, a pan, a frying pan.

अप्रतिबुद्ध *adj.*-Not attentive.

यस्यास्ति &c. He who has an access everywhere &c.

**स्वदेशराग** *m.*–A love of one's own country.

**कापुरुष** *m.*–A mean contemptible man, a coward, a wretch.

**बहुजल्पः जनः**—A garrulous man, a talkative fellow.

**भागिनेय** *m.*–A sisters son.

**कोद्रव** *m.*–A species of grain eaten by the poor.

**वराट** *m.*–A cowry ( used as a coin ); a rope cord,

**शिवनृपस्य** &c.—तदा यन्त्रशब्द-श्रवणक्षणे विविधाभिः हेतिभिः आयुधैः विभूषिताः पाणयो येषां ते तथोक्ताः। तथा सशराः सशरासनाः सधनुषः तुरगाः सन्ति येषां ते तुरगिणः अश्वारोहाः । रथिनो रथारोहाः गजिनः गजारोहाः। शिवनृपस्य वीरवराः वीरश्रेष्ठाः प्रतिययुः प्रतिजग्मुः ।

**पदचराः** &c.—यंत्राणि तोफाः पुरःसराः येषां ते तथोक्ताः सुरविमानेषु । कर्त्री । हर्षिताः हर्ष प्रापिताः अपुनरावर्तिन इति भावः । कवचिनः वर्मधारिणः विविधायुधानि धारयन्ति ते तथोक्ताः। रणे विनिर्जिताः शत्रुचयाः अरिसमूहाः यैस्ते तथोक्ताः । पदाभ्यां चरन्ति ते पदचराः पदातयोऽपि । ययुः जग्मुः ।

**यवन** &c.—यवनवर्यस्य चमूपतयः सेनापतयस्तु इदं यवनाधिपहननं शिवनृपसेनागमनं च चरमुखैः दूतमुखैः सुविस्तरं यथा तथा अवगम्य ज्ञात्वा भयेन विकंपिताः पाणिपदादयः अवयवाः येषां ते तथाभूताः सन्तः । अग्रेभवः अग्रिमः यो विधिः तत्र आति अत्यंत मन्दधियः शिथिलबुद्धयः अभवन् जाताः ।

**अयुत** &c.—अयुतं दशसहस्राणि संख्या येषां ते च ते तुरंगमसादिनश्च अश्वारोहाः करिगताश्च विशिखाधिपतेः म्लेच्छभूपस्य ते भटाशूराः शकटेषु प्रवहणेषु वेशिताः स्थापिताः यंत्रततीः यंत्रसमूहान् पुरःविधाय अग्रेकृत्वा अवतस्थिरे स्थिताः । सांप्रतं युद्धमेव वरं इति निश्चित्य युद्धोद्योगं चक्रुरितिभावः।

**उभय** &c.—दशदिशः उभये च ते सैन्येच उभयसैन्ये सैन्यद्वयं ताभ्यां समुत्थिताः उद्गताः ये रेणवः धूलयः तैः। कर्तृभिः। नितरां अत्यंतं पूरिताः पूरिताः समंतात् व्याप्ताः अतः तैः आवृतो व्याप्तो दिनकरः रविः घटिकाद्वयं कलाद्वयं जलदैः पयोदैः संवृतः अभिव्याप्तः इव समभवत् जातः ।

**करिवरैः** &c.—करिवरैः गजश्रेष्ठैः असितैः कृष्णैः सितैः शुभ्रैः च तुरगैः अश्वैः रवेः सूर्यस्य कराः किरणाः तैः उर्ध्वं गता भा प्रकाशो येषां तैः करबालकैः आयुधविशेषैः

उपलक्षिता सकला संपूर्णा समरभूः युद्धभूमिः। तडिद्भिः विद्युद्भिः सहिता ये घनाः मेघाः तैः संवृतं व्याप्तं अंबरं आकाशं तस्य रुचिं कांतिं अनुचकार तद्वत् बभौ इत्यर्थः।

समर &c. द्वौ रदौ दन्तौ येषां ते द्विरदाः ते आदिर्येषां तैः तुरगादिभिः आवृता व्याप्ता समरभूः संग्रामभूमिः सजलदं समेघं यदंबरं आकाशं तस्य कांतिं रुचिं अपाहरत् हृतवती। गगनमपि आकाशमपि रजसा धूल्या आवृतं व्याप्तं सत् भूमिभवां रजसां रुचं कांतिं असकृत् वारं वारं समहरत् किल।

नरपतिः &c. नरपतिः शिवभूपः पत्या भर्त्रा वर्जितां रहितां विधवामित्यर्थः। रिपोः शत्रोः चमूं सेनां स्वयमेव विनिहंतुं व्यापादयितुं नागात् नागमत्। यस्मात् बुधानां पण्डितानां मतः मान्यः यतः सदा सर्वदा निजे स्वकीये धर्मे रतः अत एव महान् श्रेष्ठः महान्तं लोकोत्तरपुरुषैः अनुसृतं पन्थानं शिष्टमार्गं न विजहाति न परित्यजाति।

यवनभूपति &c. कवचिनः कवचवंतः ध्वजिनः ध्वजवंतः रथिनः स्यंदनाधिरूढाः इत्यर्थः। सकलाः संपूर्णाः यवनस्य म्लेच्छस्य भूपतेः राज्ञः सैनिकाः सेनाचराः तेषां पालकाः सेनापतयः विविधानि नानावाद्यानि ढक्कापटहादीनि तेषां विशेषेण वादनं तस्मिन् तत्पराः आसक्ताः सन्तः। रणभुवि समरांगणे शरसंहतीः शरसमूहान् व्यसृजन् मुमुचुः। यवनसेनापतयः पूर्वमेवयुद्धारंभं चक्रुरित्यर्थः। प्रायः युध्दारंभं प्रथमं कुर्वतः पराजयो भवतीति ज्ञेयं।

जलद &c. जलदनिस्वनानि मेघनिन्हादानि यंत्राणि युद्धसाधनानि तेषां मुखेभ्यः उद्गता उत्पन्ना। पृथुतरा प्रथीयसी। अयसः लोहस्य इमे आयसाः। गोलकाः प्रसिद्धाः तेषां संहतिः समूहः नरपतेः शिवभूपस्य पृतनां सेनां। प्रबलः उत्कटः मरुत् वायुः कदलीनां रंभाणां ततिमिव जालमिव समकंपयत्।

नरपति &c. नरपतेः शिवभूपस्य या ध्वजिनी सेना तस्याः पतयः मुख्या तेषामपि पालकाः शिवसेनामुख्याधिकारिणः इत्यर्थः। ते सकलाः सर्वे तुरगिणः पुरतः अग्रे एकगणं एकं सेनासंघं विनिधाय स्थापयित्वा शत्रुप्रलोभनार्थमितिभावः। सर्वतः सर्वप्रदेशैः युगपत् द्विषतः शत्रोः चमूं सैन्यं आविविशुः प्राविष्टाः।

हरिखुर &c. ननु यवनपध्वजिनीपालेषु सुस्थेषु शिवभूपतिसेनापालानां कथं प्रवेशस्तत्राह। हरीणां अश्वानां ये खुराः शफानि तैः उद्धता उत्क्षिप्ता या धूलिः तस्याः चयाः पुंजाः

तैः आवृताः । प्रचुराः ये धूमाः यंत्रमुखोद्गताः ते एव पटाः वस्त्राणि तैः संवृताः आच्छादिताः यवनपाः म्लेच्छपालकाः तिमिराणां अंधकाराणां ओघः तं गता इव । स्वे परे च ते लोकाश्च तेषां विवेको विविच्यग्रहणं तेन विवर्जिताः अभूवान्निति शेषः ।

योधा &c. नृपस्य शिवभूपस्य गजिनो गजारोहाः तुरगाधिरूढाः पद्गाः पत्तयः अपि योधाः । द्विषनः शत्रोः अनीकिनिकाम् सेनां समेत्य संप्राप्य भयमेव भीतिरेव वार्धिः समुद्रः तस्मिन् मग्नं, वीराणां शूराणां व्रजं समूहं सिंहाःअलं अत्यंतं प्रमत्तं अनवधानं गजसमूहं हस्तिततिमिव रुरुजुः पीडयामासुः ।

यवनसैन्यपतिः &c. करिणः गजस्य मस्तको मूर्धा तदुपरिगतः सशरः सबाणः सशरासनः धन्वी यवनसैन्यस्य म्लेच्छसेनायाः पतिः। सकलानां समग्राणां यंत्राणां युद्धाणां विक्षेपाणां समूहः संघः तस्य विमोक्षणे मोचने सकलान् समग्रान् तदधिपान् यंत्राधिपतीन् अचोदयत् प्रेरितवान् ।

निःसृत &c. शिवभूपस्य योधाः वीराः निर्भयः त्रिभ्यः अंगुलिभ्यः निःसृतः खड्गः करवालः कृपाणः कुंतः भल्लः असिः पट्टिशश्च शिलायां सिताः ये बाणपूगाः शरनिकराः च तैः यंत्रैः हस्तधृतैः । बंदुक इति प्रसिद्धैः । तोमराश्च परश्वधाश्च शक्तयश्च ऋष्टयश्च चक्राणि च तैः अपरान् शत्रून् जघ्नुः ।

ते बर्बराः &c. मधुनः मद्यस्य पानेन मत्ताः अत एव विशेषेण घूर्णिताः भ्रामिताः दृशः दृष्टयः यैस्ते । नाना प्रकाराणि आयुधानि शस्त्राणि येषां ते बर्बराः अपि शकाः पारसीकाः हूणाः तंगणानां गणाश्च शिखाभिः सहिताः सशिखाः नास्ति शिखा येषां ते अशिखाश्च ते म्लेच्छाः म्लेच्छजातयः नरपस्य शिवभूपस्य भटैः सह युयुधिरे ।

मध्याह्नगे &c. भीरोः भयशीलस्य भयस्य उद्भवःउत्पत्तिः तस्यकरोतीति करम् ।शूरव्रजस्य शूरसंघस्य बहुहर्षं अति संतोषं ददातीति तथोक्तं तत् युद्धं सवितरि सूर्ये अह्नःमध्यो मध्याह्नः तं गच्छतीति मध्याह्नगः तस्मिन् सति । प्रबभूव जातं । रुधिरौघेण रक्तप्रवाहेण परिताः प्लुताः व्याप्तास्ते वीराः पुष्पनिचयैः कुसुमसमूहैः सहिताः सपुष्पनिचयाः किंशुकानां ओघा इव रेजुः शुशुभिरे ।

छिन्नेपि &c. एकः वीरः दक्षिणकरे छिन्ने सत्यपि लूनेपि अन्यकरेण वामकरेण शत्रोः अरेः स्वहस्तछेत्तुः सह खड्गं खड्गेन सहेति सहखड्गः तं खड्गयुतं दक्षं दक्षिणं करं हस्तं समलुनात् छेदितवान् । अन्यः वीरः करयोर्द्वयं तेन विहीनं कलेवरं यस्य सोपि भुजंगम इव सर्प इव स्वं

स्वकीयं शत्रुं अरिं दंतैः रदैः व्यद-
शत् दष्टवान् ।

विद्धोऽपि &c. एकः वीरः शरेण बाणेन वक्षसि उरसि सपत्रं सपुंखं यथा तथा विद्धः परिक्षतः सन्नपि दशनच्छदं ओष्ठं दद्भिः दन्तैः रोषात् कोपात् विदश्य दष्ट्वा निजरिपोः स्वशत्रोः वेद्धुरित्यर्थः । शिरः मस्तकं छित्वा हे शंकर हे ईश हे भव हे सांब हे शिव इति जल्पन् भाषमाणः सन् अत्र रणभूमौ देहं कलेवरं मुमोच । अन्तकाले शिवनामस्मरणात् अयं वीरः उत्तमां गतिं गतः इति ज्ञेयं । तदुक्तं गीतासु । अन्तकाले च मामेवम् स्मरेन्मुक्त्वा कलेवरं । यः प्रयाति त्यजन् देहं स याति परमां गतिं इति।

छिन्नेपि &c. करवालः कृपाणः पाणौ हस्ते यस्येति तथोक्तः । अन्यः वीरः मूर्धनि शिरसि छिन्नेपि लूने सत्यपि अमुना शत्रुणा हेतुभूतेन नाकं स्वर्गं गच्छामि अतः हेतोः एनं शत्रुं नाकं नयामि नो चेत् कृतघ्नतरता भविता इति हेतोः झटिति शीघ्रं स्वशिरश्छेदनक्षणे एव स्वशत्रोः स्वशिरश्छेत्तुः शिरः छित्वा निजतनुं स्वशरीरं असृजत् अत्यजत् । Expl. Another warrior with a sword in his hand said, "I would go to स्वर्ग and take the enemy to it if not I would commit the sin of ungratefulness;" with these words he instantly cut off the head of his enemy, though his own head was already severed from the body and thus left off the trunk (on the battle-field ).

छित्वा &c. एकः वीरः करं शुंडां छित्वा करिवरं गजश्रेष्ठं भूमौ विनिपात्य यदा गजपतिं गजारोहं जघान हतवान् तदा असौ गजारूढः। हन्त इति खेदे । अल्ल हे अंब इति मातरं संबोध्य । संकटे हि मातरं स्मरंति सर्वे । यद्वा अल्ला इति यवनदेवतानाम । अयं यवन इति ज्ञेयं । उदीर्य उक्त्वा भूमौ गजादिति ज्ञेयं । निपपात असौ करिणा सह तत्क्षणे देहं मुमोच । Expl. Another warrior having cut off the trunk of a huge elephant and having brought him down killed the elephant-rider. And he ( the elephant-rider ) uttering the word ' अल्ला ' fell on the ground and instantly gave up his breath with that of the elephant.

वीरौ &c. धनुः प्रहरणं ययोः तौ धनुःप्रहरणौ उभौ वीरौ । कर्तारौ।

परस्परं युगपत् एकसमयावच्छेदेन सपत्रा कृत्वा सपुंखशरप्रवेशेन अतिव्यथितकरणेन । देहौ प्रविहाय त्यक्त्वा दस्रौ अश्विनीकुमाराविव सख्यं समुपेत्य अतिरुचिरौ संतौ दिव्यदेहौ इत्यर्थः । एकं विमानमधिरुह्य दिवं प्रयातौ । यद्वा दस्राविव अतिरुचिरौ सुंदरदेहौ। देवमध्ये तयोरतिरुचिरत्वं प्रसिद्धं । सख्यमुपेत्य विमानमधिरुह्य दिवं स्वर्गं प्रयातौ ।

शाक्तीक &c. एकः अन्य शक्तिः प्रहरणं यस्येति शाक्तिकः पुरतः अग्रभागे स्थितेन रिपुणा स्वे स्वकीये उरसि प्रतिरोपितं बाणं विलोक्य रोषेण क्रोधेन अन्वितः युक्तःसन् अस्य रिपोःहृदयं शक्त्या लोहमयेन आयुधविशेषेण । लोके सांग इति प्रसिद्धेन।प्रविदार्य ततः अर्कमंडलं भित्त्वा निर्जगाम । असौ रिपुरपि अर्कमंडलं भित्त्वा निर्जगाम उत्तमां गतिं गतः इत्यर्थः । रणे अभिमुखं हतः सूर्यमंडलं भित्त्वा व्रजतीति पुराणेषु प्रसिद्धं । 'द्वावेवपुरुषौ लोके सूर्यमंडलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः' ।

कुंतायुधौ &c. समरः संग्रामः तस्य अजिरं अंगणं तत्र तिष्ठतः तौ समरांगणस्थौ । कुंतः आयुधं ययोः तौ तुरगिणौ अश्वारोहौ उभावपि मर्मदेशे जीवस्थाने परस्परं भित्वा कलेवरं वैरं च प्रविहाय त्यक्त्वा सुरोत्तमौ देवश्रेष्ठौ ताभ्यां समानं वपुः दधाते तौ दधानौ संतौ स्वर्गं यातौ गतौ ।

सपट्टिश: &c. पट्टिशेन सहितः सपट्टिशः वारबाणः कंचुकः सोऽस्य अस्तीति वारबाणी । चर्म करे यस्येति चर्मकरः । रणस्य अंगणं उपेत्य गजान्, विगता शुंडा येभ्यस्ते विगतशुंडाः तान् तुरगान् अश्वान् वितुंडान् तुंडरहितान् मुखहीनान् प्रचंडान् कोपनान् भटान् वीरान् विमुंडान् छिन्नशिरस्कान् कृतवान् चकार ।

रक्तोक्षिता &c. रक्तेन रुधिरेण उक्षिता सिक्ता समरभूः संग्रामभूमिः सायं संध्याकाले सूर्यप्रभया रविप्रकाशेन आकलितो यो वारिदसंघः मेघसमूहः तस्य शोभां कांतिं विजहार हृतवती । सकलं समग्रं रजोपि धूलिरपि शांतं सत् तदानीं पंकत्वं कर्दमत्वं समगात् अगच्छत् । अत्र पंके । बत इतिखेदे । केचन वीराः शेरते स्म । भिन्नांगत्वात् अन्यत्र गंतुमशक्तत्वात् तत्रैव स्थिताः इत्यर्थः ।

दात्यूह &c. समेता मिलिता दात्यूहाः काकाः गृध्राः प्रसिद्धाः तेषां निचयाः संघाः। यद्वा । दात्यूहाश्च गृध्रनिचयाश्च इति समासः । उपरि रणभूमेःउर्ध्वप्रदेशे भ्रमंतःसंतः कुहचित् कुत्रचित् वसतिं स्थितिं नैवा-

लभंत । यवनाधिपस्य अब्दुल्लाख्यस्य शीर्षे स्थितं तत् अपकीर्तिपटलं अयशोमंडलं वसतेः स्थितेरभावात् भ्रमतीत्यहं मन्ये । शिवभूपेन पराजितस्य यवनाधिपस्य शिरसि अयशोमंडलं तस्थौ । तस्मिन् मृते तु तत् कृष्णकाकगृध्रसंघामिषेण शिवभूपसेनापतिं सुखं वस्तुं स्थलं याचते इवेति भावः ।

योधा &c.—विगताः कोशाः पिधानानि एषां ते विकोशाः । करवालाः खड्गाः करेषु येषां ते तथाभूताः अत एव करालाः भयंकराः योधाः भटाः । तां कातरां भीतां यवनपध्वजिनीं म्लेच्छसेनां तथा अकृंतन् अच्छिदन् । तथा कथं । यथा निजः स्वकीयं सुहृन्मित्रं दुर्योधनः । तस्य प्रियं इष्टं तत्करोतीति कृत् । कृपाणोऽस्यास्तीति कृपाणी द्रोणस्य अपत्यं द्रौणिः अश्वत्थामा । अर्जुनस्य शिष्टं अवशिष्टं बलं सैन्यं व्यनीनशत् नाशितवान् ।

कंधरां &c.—कस्यचिद्वीरस्य कं शिरः । कंधरां ग्रीवां अपहाय त्यक्त्वा धराम् पृथ्वीं प्राप्य । संयति संग्रामे जहास हासं चक्रे । [illegible]शयं विवृणोति । दुःखेन भ्रियते तत् दुर्भरं तस्य दुर्भरस्य जठरस्य उदरस्य प्रपूर्तये पूरणाय मां [illegible] निरंतरं नमयसीति नमयन् तस्य नमयतः। ते इति शेषः । पुरः अग्रे कं । मम वियोगे तव जठरपूरणं कथं स्यात् इति भावः ।

प्रेतव्रात &c.—प्रेतानां कंकालानां व्रातः समूहः स एव अचलः पर्वतः तस्मात् उत्था उत्पन्ना । तथा रुधिरं रक्तं तदेव जलं वारि तद्वहतीति तथोक्ता । हस्तिनां गजानां हस्ताः शुंडास्तेषां ओघाः प्रवाहाः एव मीनाः मत्स्याः यस्यां सा शुभ्राणि अच्छानि उष्णीषाणि शिरोवेष्टनानि तान्येव फेनः डिंडिरः यस्यां सा नराणां कराः पाणयः एव भुजंगाः पंचफणाः सर्पाः यस्यां सा । केशा एव जंबालं शैवालं तेन युक्ता । बालानां केशानां आलिः पंक्तिः तया आलीढानि व्याप्तानि वक्त्राणि मुखानि तेषां अवलिः पंक्तिः सैव जलजचयः कमलसंघो यस्यां सा। चर्माणि लोके ढाल इति प्रसिद्धानि । तान्येव कच्छाः कमठाः यस्यां सा । गजेंद्राः नागश्रेष्ठाः ते एव ग्रावाणः नदीमध्यवर्तिपाषाणाः तेषामाघातः आघट्टनं तेन प्रकृष्टः शब्दो यस्याः सा तां रणभुवं समरभूमिं प्लावयन्ती मज्जन्ती तटिनी नदी समजनि उत्पन्ना ।

द्रुतो &c.—जयमिच्छति तच्छीलः जयैषी । तरस्वी वेगवान् जमालनामा वीरः सेनापतिः स्वसेनां द्रुतां भयात् अपयातां प्रसमीक्ष्य दृष्ट्वा । सहस्रं संख्या एषां तैः तुर-

गाधिरूढैः अश्वारोहैः समन्वितः युक्तः सन् अभ्यपतत् आगतवान्।

स &c.—संयुगे रणे साधु सांयुगीनः समराजिरे रणांगणे तिष्ठतीति तथोक्तः । वारबाणेन कंचुकेन सहितः सवारबाणः। तलेन ज्याघातवारणेन सहितः सतलः । तूणेन निषंगेण सहितः सतूणः। कर्मणे प्रभवतीति कार्मुकं धनुः तेन सहितः सकार्मुकः सबाणासनः सर्वैः अवशिष्टैः भटैः वीरैः उपेतः युक्तः स जमालनामा सेनापतिः। समानि पर्वाणि भजंति तान् बाणान् ससर्ज मुमोच ।

घन &c.–यथा घनः मेघः प्रावृषि वर्षाकाले महीधरे पर्वते अतिमात्रं वर्षति तथा स शरान् बाणान् । व्यात्तं विजृंभितं मुखं आस्यं यैः तान् भुजंगान् इव । राज्ञा शिवेन नियुक्तं यत्सैन्यं तस्मिन् असृजत् विसृष्टवान् ।

तदीय &c. कचैः केशैः आचिता व्याप्ताः ताम्राणि मुखानि येषां ते ताम्रमुखाः सुरां पिबंति ते सुरापाः। वाजिवाहाः अश्वरोहाः तस्य इमे तदीयाः तदीयाश्च ते योधाश्च तदीययोधाः । शरैः बाणैः भल्लैः परिघैः कृपाणैः खड्गैः आजौ संग्रामे पार्थिवसैन्यं शिवभूपचमूं । अपीडयत् ।

दिनावसाने &c.–खलीनेन मुखरज्ज्वा। लोके लगाम इति प्रसिद्धेन। लीनं नम्रं आननं मुखं यस्य स च असौ वाजी अश्वः तेन सीदति गच्छतीति तथोक्तः। कृपाणपाणिः खड्गहस्तः नृपस्य सैन्यनाथः सेनापतिः योधसंघैः सह । यवनाधिपस्य यवनसेनापतेः पुरः अग्रभागे । दिनस्यावसानं समाप्तिः संध्याकाले इत्यर्थः । अभियातः प्राप्तः ।

तयोः &c. सैन्येन सहितौ ससैन्यौ तयोः ससैन्ययोः। वीराणां चमूः वीरचमूः सादिता वीरचमूर्याभ्यां तौ तयोः सेनाधिपयोः युद्धं संग्रामः अमोघैः सफलैः तीक्ष्णैः निशितैः शरैः बाणैः खड्गैः असिभिः भल्लैः लोहमयबाणैः करवालकैः च घटीद्वयं कलाद्वयं अतीव अत्यंतं घोरं दारुणं अभूत् बभूव ।

गजाः &c. मत्ताः मदोद्रेकाः गजाः हस्तिनः तुरगाश्च अश्वाश्च क्रमेलाः उष्ट्राश्च वृषाः यंत्रनियुक्ताः वृषभाः खड्गैः अभिहताः सन्तः निपेतुः पतन्ति स्म, भूमौ इति शेषः । भूः भूमिः नृणां राज्ञां पतितैः शिरोभिः मस्तकैः देहैश्च समास्तृता अत एव रुधिरौघेण रक्तप्रवाहेण पूर्णा अभूत् ।

नृपस्य &c. नृपस्य शिवभूपस्य वीरैः भटैः बहुधा बहुप्रकारेण विशीर्णाः विखंडिताः अत एव भीताः कंपिताः यवनाः म्लेच्छाः विदुद्रुवुः

पलायनं चक्रुः । केचन भटाः वीराः वक्तृमध्ये मुखे तृणं दधुः। अतीवनम्राः बभूवुरित्यर्थः । तथैव केचित् प्रणेमुः नमश्चक्रुः। शरणं ययुरित्यर्थः ।

गजं &c. नृपस्य वीराः गजं हस्तिनं विगता शुंडा यथा स्यात् तथा भूमौ विनिपात्य जमालसंज्ञं यवनं कृपाणैः खड्गैः बिभिदुः विदारयामासुः। स तु जमालः आजौ संमर्दे देहं शरीरं विधाय रणभूमौ कलेवरं त्यक्त्वा दिवमेव यातः समरात् अनिवर्तनात् इति भावः ।

हतावशिष्टाः &c.—हतेभ्यो ये अवशिष्टाः ते हेतीः आयुधानि रणभूमाविति शेषः। विनिधाय निशायां रात्रौ सत्यां। भीत्या भयेन विवर्णानि वक्त्राणि येषां तथा भूताः संतः विदिशो दिशश्च तथा ययुः जग्मुः यथा मृगाः वृकान् आलक्ष्य दृष्ट्वा भयात् द्रवंति पलायंते ।

महाबलः &c—महाबलः अब्दुल्लस्य सुतः वल्ली । पदयोः द्वये चीराणी वस्त्रखंडानि निबध्य उपानदभावादिति भावः । दिनस्यावसानं प्रदोषः तस्मिन् तिमिरेण अंधकारेण पूर्णं वृक्षैः पिहितं आच्छादितं प्रदेशं दुद्राव पलायामास ।

पचिक्रिया &c.—राजभटाः इति शेषः। पचिक्रिया पाककरणं अर्णसः उदकस्य नयनं प्रापणं । ते आदी येषां तानि कर्माणि तत्र नियुक्ता मनुष्याः । ये च भिक्षंते ते भिक्षवः भिक्षव एव भिक्षुकाः ये च भिषग्वराः वैद्याः दीनाश्च स्त्रीविषयाश्च शस्त्रैर्विहीना अपि ये तान् न जघ्नुः ।

बभूव &c.—तत् भूमितलं तदानीं तस्मिन् काले पिशाचपतेः शिवस्य निवासेन श्मशानेन तुल्यं बभूव । तत्र भूतले एके ज्ञानिनः हे शिव, शंभो मां अत्र रक्ष उत्तमां गतिं देहीति प्रार्थयामासुरित्यर्थः। एके अज्ञाः। हा इति खेदे । हा तात हे पितः।एके हा बालसुत अल्पवयस्क पुत्र । अल्पवयसः तव कथं मरणं स्यात् इति बुध्या इति भावः। यद्वा बालः सुतो यस्याः सा बालसुता स्त्री ममेति केचित् उदूचुः उच्चैः बभाषिरे ।

अनर्गला &c.—नास्ति अर्गला बंधनं येषां ते अनर्गलाः । आर्तिं पीडां भजन्ति ते आर्तिभाजः। वाजिगजादयो वाहाः वाहनानि इतस्ततः रणभूमौ बभ्रमुः। नृपालस्य शिवभूपालस्य सेनापतेः सैनिकाः । समेता मिलिता हृष्टतराः। स्वजयादिति भावः । तान् वाहान अपाहरन् ।

स &c.— दुंदुभेः भेर्याः । तस्य ध्वानः शब्दः तेन निवेदिताः प्रख्यापिताः उद्यन जयो यस्य सः । बं-

द्विजनेन स्तुतिपाठकेन स्तुता श्रीः जयश्रीः यस्य सः। यशांस्येव वितानानि उल्लोचाः तैः दिशः विदिशश्च विपूरयन् ससैन्यः स नथुनामा सेनापतिः।राजगिरिं नाम पर्वतं। लोके रायगड इति प्रसिद्धं शिवभूपाधिष्ठितं ययौ जगाम।

शिवोऽपि &c. नरः इंद्र इव नरेंद्रः। शिवोऽपि भूपः राजा जयः अस्यास्तीति जयी तं जयिनं विजयशीलं आरात् समीपे गतं प्राप्तं तं सेनापतिं समालिंग्य आश्लिष्य विभूषणाद्यैः गिरा वाण्या च सत्कृत्य मही सुरेभ्यः ब्राह्मणेभ्यः भूरितरं प्रभूततरं धनं ददौ।

शतं &c. अग्रं नयतीति अग्रणीः। भटेषु अग्रणीः श्रेष्ठः अत एव सादितः विनाशितः शत्रुपक्षो येन। वाहिनीं सेनां पातीति वाहिनीपः सेनापतिः स नथुनामा। शतं शतसंख्या गजाः पंचसहस्राणि संख्या येषां ते तुरंगमाः तद्द्विगुणिताः क्रमेलाः उष्ट्राः सहस्रमिता रथाः। वसनानि भूषाः भूषणानि मुक्ताफलानां मौक्तिकानां प्रकाराश्च राशयश्च इति यत् तत्।

रत्नानि &c. तथा रत्नानि हीरकादीनि हेम्नः सुवर्णस्यापि सप्तलक्षसंख्या मुद्राः। होन इति लोके प्रसिद्धाः। चकारात् रजतस्यापि मुद्राः गम्यन्ते। तस्य शिवभूपस्य पुरो निधाय पाणी हस्तौ विनिबध्य वद्धेगेति शेषः। तस्थौ स्थितवान्। युग्ममेतत्।

नृपस्तु &c. नृपस्तु शिवभूपस्तु तत्सर्वं गजाश्वादिकं प्रगृह्य भटानां अधिपः भटाधिपः वीरश्चासौ भटाधिपश्च वीरभटाधिपः तस्मै प्रत्यर्पयत् अर्पितवान्। त्वया अद्य अस्मिन् दिने न तु दिनान्तरे एतत् सकलं स्वे स्वकीया ये भटाः तेषां प्रभुभ्यः। एवं। मया यथा लोभं परित्यज्य तुभ्यं तथैव त्वयापीत्यर्थः प्रदेयम् इति जगाद च।

प्रजा &c मया इतः अस्मादिति इतः अस्माद्दिवसात् अमुं दिवसं आरभ्य इत्यर्थः। प्रजानां प्रपीडाः तासां कराः कारकाः शत्रवः तेषां वर्गः समूहः तस्य विनाशो यस्मात् आरब्धोस्ति। विनाशस्यापि हेतुमाह। यत् यस्मात् कारणात् देवी जगदंबिका निशायाः रात्र्याः अवसानं गोदोहनसमये इत्यर्थः। एतेन स्वप्नस्य झटिति प्रत्ययः स्यादिति भावः। स्वप्ने स्वप्नावस्थायां समागत्य। हे शिव इति शेषः। नीचानां दुर्वृत्तानां वर्गं हर नाशय इत्याह वदति। देव्याः पुनः पुनः प्रेरणादवश्यं कर्तव्यं दुर्जनक्षये सहाय्यभूतवीरतोषार्थं सर्वमिदं तेभ्यो देयमिति भावः।

निशम्य &c.– वराः श्रेष्ठाः ये वीराः तेषां नाथः स्वामी नथुनामधेयः। तथा शिवभूपोक्तप्रकारेण चक्रे

